॥ श्रीः ॥

# न्यायप्रदीपः ।



श्रीमन्महाराजाऽधिराजमहारावराजेत्यादिपदवी-

विराजमान-

श्रीबुन्दीपुरपुरन्दर-

श्रीरघुवीरसिंहभूपतिमाश्रितेन

विदुषाङ्किङ्करेण

गङ्गासहायशर्म्मणा सङ्कलितः ।



स च

मुम्बानगर्य्यां

श्रेष्ठिवर्य्यश्रीकृष्णदासात्मजखेमराजेन

स्वकीये "श्रीवेङ्कटेश्वर" नाम्नि

यन्त्रालये मुद्रितः ।

विक्रमार्कसंवत् १९६४, खिष्टाब्दाः १९०७.

॥ श्रीः ॥

# भूमिका ।

विदितमेवेदं सर्वेषां सूक्ष्मदृशां स्थूलदृशां च, यत्संस्कृतभाषा सर्वाभ्यो लोकप्रसिद्धाभ्यो भाषाभ्योऽतिप्राचीना दोषगन्धेनापि रहिता सर्वैः समादृता वर्णनीयविषयानुसारेण यथोपयोगं ललिता मधुरा परुषा प्रसन्ना चेत्यादिमहासौष्ठवा, तस्यां च नानाविधा व्याकरणसाहित्य-वेदान्तेतिहासनीतिधर्मशास्त्रादयोऽगणिता विद्यास्सन्ति । यद्यपि ताः सर्वा अपि विद्याः स्वस्वविषयनिरूपणेऽनुपमा एव तथापि पदार्थ-निर्वचने ऊहापोहसौकर्यसम्पादनेन बुद्धितीक्ष्णीकरणे यस्य कस्य-चिद्विषयस्य सम्यङ्निरूपणे च तर्कशास्त्रमेवैकं सर्वोपरि वरीवर्ति । वद-न्ति च वृद्धाः-"काणादम्पाणिनीयञ्च सर्वशास्त्रोपकारके" इति । यद्य-प्यत्र उभे शास्त्रे समानोपकारके पठिते तथापि शब्दशुद्धिमात्रफलका-द्व्याकरणाद्बुद्धिप्रकर्षवाक्प्रागल्भ्यादिवहुफलं तर्कशास्त्रमेव । किम्ब-हुना "विना व्याकरणेनान्धो बधिरः कोशवर्जितः । छन्दःशास्त्रं विना पङ्गुर्मूकस्तर्कविवर्जितः॥" इति लोकोक्त्यापि व्याकरणं विना-न्धतुल्येन गानपाठनपठनादिभिः किमपि सम्पादयितुं शक्यन्न तु तर्कशास्त्रं विना मूकतुल्येनाकिंचित्करेणेति द्योतितम् । तथापि तर्कशास्त्रं कठिनमतस्सूक्ष्मधीभिरपि सुखेन बोद्धुं न शक्यते किम्पुनरल्पबुद्धिभि-रिति, यतः "पक्षाद्वैयाकरणः क्षणादूर्ध्वमतार्किकः" इति लोकोक्तिः क्षणमात्रमनभ्यासे तद्विस्मरणङ्कथयति । यद्यपि तर्कभाषादयः सुगमा अपि ग्रन्थास्तर्कशास्त्रे सन्ति तथापि तेष्वावश्यकाः सर्वे विषया न सन्तीत्यतो मन्दमतिनाऽनवबुद्धशास्त्राशयेनापि मया स्वसुतानाम्भ्रातु-ष्पुत्राणां च सुखेन बोधायान्यग्रन्थेभ्यः किंचित्किञ्चिद्वीक्षित्वा प्राय-स्सर्वानप्यवश्यलेख्यान् विषयान् सुगमया रीत्या यथामति सङ्गृह्य न्यायप्रदीपोयं रचितः । यद्यपि मन्दमतिना सङ्गृहीते ग्रन्थे दोषा अपि बहवस्संभवन्त्येव तथापि तच्छोधनाय विद्वन्मणीन्संप्रार्थयेऽत एव मदीयबालचापलेन हसन्तोपि ते कृपयेमं शोधयिष्यन्तीति निर्वृ-तोऽस्मीति विदुषाङ्किङ्करो गङ्गासहायशर्मा निवेदयते ॥

॥ श्रीः ॥

# अथ न्यायप्रदीपः प्रारभ्यते ।

श्रीगणेशाय नमः ॥ श्रीपरमेश्वराय नमः ॥

सतां सकाशतो भिक्षाकणान्संगृह्य यत्नतः ॥
सर्वेशितुश्चरणयोरुपदा काचिदर्प्यते ॥ १ ॥
मानैः प्रमेयमयते गुणकर्मजाति-
द्रव्यादिभिर्विभजते निखिलान्सतोऽर्थान् ॥
यो निग्रहस्थलमलं नयते विपक्षा-
न्बुन्दीश्वरः स भुवि राजति रामसिंहः ॥ २ ॥
बुन्दीशलब्धवार्त्तः कुर्वे गङ्गासहायशर्माहम् ॥
निजसुतसहजसुतानां हेतोर्न्यायप्रदीपमतिसुगमम् ॥ ३ ॥
तर्कशास्त्रं कणादेन कृतं वैशेषिकाभिधम् ॥
तदाहुरौलूक्यमपि न्यायाख्यं गौतमोदितम् ॥ ४ ॥
तत्र पदार्थनिरुक्तावुद्देशो लक्षणम्परीक्षा च ॥
त्रिविधा प्रवृत्तिरस्योद्देशो नाम्नैव वस्तुकथनं स्यात् ॥ ५ ॥
लक्ष्ये सर्वत्र यत्तिष्ठेदलक्ष्यं यन्न गच्छति ॥
स धर्मो लक्षणं ज्ञेयं सास्नावत्त्वादि गोर्यथा ॥ ६ ॥
परीक्षा लक्ष्मनिर्णीतिरथ दोषास्तु लक्ष्मणाम् ॥
अव्याप्तिश्चाप्यतिव्याप्तिरसंभव इति त्रयः ॥ ७ ॥

---

१ बुन्दीभूपे तार्किकत्वं व्यङ्ग्यम् ।

अव्याप्तिर्लक्ष्यैकदेशे वृत्तिर्गोः कपिलत्ववत् ॥
अतिव्याप्तिरलक्ष्येपि वृत्तिर्गोः शृंगवत्त्ववत् ॥ ८ ॥
असम्भवो लक्ष्यमात्रावृत्तिरेकशफत्ववत् ॥
अथात्र शास्त्रे विज्ञेयमनुबन्धचतुष्टयम् ॥ ९ ॥
पदार्था विषयास्स्युस्तद्बोधमोक्षौ प्रयोजने ॥
अधिकारी तयोरर्थी सम्बन्धो विषयैः सह ॥ १० ॥
शास्त्रस्यास्य प्रतिपाद्यप्रतिपादकताभिधः ॥
ईशनत्यादिकं शास्त्राद्यारंभे मङ्गलं विदुः ॥११॥
विघ्नध्वंसेन ग्रंथादिसमाप्तिं तत्प्रयोजनम् ॥
नव्या विघ्नध्वंसमेव समाप्तिम्प्रतिभादिभिः ॥ १२ ॥
देहादिष्वात्मधीर्मिथ्याज्ञानं शास्त्रेण नश्यति ॥
ततो मुक्तिर्भवेत्सा चात्यंतिकं दुःखनाशनम् ॥ १३ ॥
षडिन्द्रियाणि षड्रागा विषयेष्वथ षड्धियः ॥
सुखं दुःखं शरीरञ्च स्युर्दुःखान्येकविंशतिः ॥ १४ ॥
द्रव्यं गुणश्च कर्म च सामान्यविशेषसमवायाः ॥
कणभुग्मते पदार्था अधिक इह स्यादभावोपि ॥ १५ ॥
द्रव्यादींश्चतुरस्संख्यां शक्तिं सदृशतां तथा ॥
समवायमिमानष्टौ पदार्थान्गुरवो जगुः ॥ १६ ॥
स्वत्ववैशिष्ट्यकार्यत्वशुद्ध्यादीनधिकान्परे ॥
द्रव्याद्याश्चत्वार एव तौतातिकमते मताः ॥ १७ ॥
द्रव्याणि क्ष्मप्तेजोऽनिलखानेहोदिगात्मचित्तानि ॥
अथ रूपरसौ गन्धः स्पर्शः संख्या च परिमितिपृथक्त्वे १८

संयोगश्च विभागः परत्वमपरत्वगौरवद्रवताः ॥
स्नेहः शब्दो बुद्धिः सुखदुःखेच्छास्तथा द्वेषः ॥ १९ ॥
यत्नो धर्माधर्मौ संस्कारोऽमी गुणा अथो कर्म ॥
उत्क्षेपापक्षेपावाकुञ्चश्च प्रसारणं गमनम् ॥ २० ॥
गमनेऽन्तर्भविष्यन्ति कर्माणि सकलान्यपि ॥
प्रत्यक्षाप्रत्यक्षते तु कर्मणः स्वाश्रयानुगे ॥ २१ ॥
त्वग्दृग्ग्राह्यं तु तज्ज्ञेयं मूर्त्तद्रव्येषु वर्त्तते ॥
पूर्वं क्रिया भवेत्पश्चाद्विभागः पूर्वदेशतः ॥ २२ ॥
प्राग्देशसंयोगनाशः परदेशेन संयुतिः ॥
विभागकर्मणोर्नाशे ततः कर्मान्तरोद्भवः ॥
एवं क्रमेण सर्वत्र ज्ञेया कर्मपरम्परा ॥ २३ ॥
नित्यमनेकानुगतं सामान्यन्तत्परापरन्द्वेधा ॥
द्रव्यादित्रिकवृत्तिः सत्तापरमधिकदेशवृत्तित्वात् ॥ २४ ॥
घटत्वाद्यपरं न्यूनदेशवर्त्तितया मतम् ॥
अपेक्षयोभयविधं द्रव्यत्वादि परापरम् ॥ २५ ॥
व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ॥
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ २६ ॥
तस्मादिहाकाशत्वादिरुपाधिरिति कीर्त्यते ॥
जात्युपाधिभिदा प्रोक्ता केवलं न्यायदर्शने ॥ २७ ॥
व्यावर्त्तका विशेषा नित्यद्रव्याश्रिता अनन्ताश्च ॥
काणादा एतत्स्वीकाराद्वैशेषिकाः प्रोक्ताः ॥ २८ ॥

अवयविनोऽवयवेषु च विशेषगुणकर्मणान्द्रव्ये ॥
द्रव्यादित्रिषु जातेरेकः संबन्ध एष समवायः ॥ २९ ॥
संसर्गान्योन्यभिदा द्विधास्त्यभावस्त्रिधाऽऽद्यः ॥
ध्वंसप्रागत्यन्ताभावभिदाथाधिकोपि सामयिकः ॥ ३० ॥
घटादेर्मुद्गरादिभ्यो ध्वंसाभावः प्रकीर्त्तितः ॥
प्रागभावो घटोत्पत्तेः पुरा यः स्यात्कपालगः ॥ ३१ ॥
वायौ रूपादेरभावोऽत्यन्ताभावः प्रकीर्त्यते ॥
भूतलादौ घटादेर्योऽभावः सामयिकस्तु सः ॥ ३२ ॥
अत्यन्ताभावमेवात्र नवीनाः प्रतिजानते ॥
घटो न पट इत्यादावन्योन्याभाव इष्यते ॥ ३३ ॥
मीमांसकमतेऽभावः स्वाधारान्नातिरिच्यते ॥ ३४ ॥

इति पदार्थविभागः ।

---

द्रव्यत्वाद्याः सप्त धर्माः पदार्थानां विभाजकाः ॥
आद्यास्त्रयो जातयः स्युर्ज्ञेयाः शेषा उपाधयः १ ॥
जातयः पृथिवीत्वाद्या ज्ञेया द्रव्यविभाजकाः ॥
आकाशत्वञ्च कालत्वन्दिक्त्वञ्चैतान्युपाधयः ॥ २ ॥
चत्वारः क्ष्मादयो द्वेधा तत्राद्याः परमाणवः ॥
द्व्यणुकाद्याः कार्यरूपाः परे ते तु पुनस्त्रिधा ॥ ३ ॥
देहेन्द्रिये च विषय इति प्राहुरथ क्षितेः ॥
योनिजायोनिजौ देहौ योनिजस्तु द्विधा भवेत् ॥ ४ ॥

जरायुजोण्डजश्चेति मनुष्यादेः स आदिमः ॥
पक्षिसर्पादेर्द्वितीयस्त्रिविधः स्यादयोनिजः ॥ ५ ॥
उद्भिज्जः स्वेदजो दृष्टविशेषजनितोपि च ॥
स वृक्षदंशमन्वादेरन्त्यः केवलशास्त्रतः ॥ ६ ॥
गन्धग्राहीन्द्रियं घ्राणं मृदादिर्विषयोऽखिलः ॥
नीरेन्द्रियं तु रसनं सिन्ध्वादिर्विषयो मतः ॥ ७ ॥
अयोनिजः शास्त्रगम्यो देहो वरुणलोकगः ॥
इन्द्रियं तैजसो दृक् स्याच्छरीरं सूर्यलोकगम् ॥ ८ ॥
चतुर्द्धा विषयो भौमदिव्यौदर्याकरोद्भवः ॥
वह्निविद्युज्जाठराग्निसुवर्णादिरुदाहृतिः ॥ ९ ॥
न तैजसं सुवर्णादिरिति नव्यमतम्मतम् ॥
त्वग्वायोरिन्द्रियं देहो वायुलोकेऽस्ति शास्त्रतः ॥ १० ॥
प्राणादिर्विषयो वायुर्न प्रत्यक्षो जरन्मते ॥
एकैकव्यक्तयो नित्या विभवः खादयस्त्रयः ॥ ११ ॥
इन्द्रियं खस्य तु श्रोत्रङ्कटाकाशाद्युपाधितः ॥
परे शब्दाश्रयं वायुं शून्यमाकाशमूचिरे ॥ १२ ॥
काल एकोप्यतीतादिः क्षणादिश्चाप्युपाधितः ॥
तस्योपाधिर्जन्यमात्रं प्राञ्च आहू रवेः क्रियाम् ॥ १३ ॥
एकाप्युपाधिभेदाद्दिक् प्राच्यादिव्यपदेशभाक् ॥
तदुपाधिमूर्त्तमात्रन्दिक्कालौ जगदाश्रयौ ॥ १४ ॥
कालाकाशदिशामीशेऽन्तर्भावोऽस्ति शिरोमणेः ॥
आत्मा ज्ञानाधिकरणमीशो जीव इति द्विधा ॥ १५ ॥

नित्यौ विभू चेतनौ द्वावीशः सृष्ट्यादिकारकः ॥
एकोऽशरीरी च नित्यज्ञानेच्छाकृतिमानपि ॥ १६ ॥
सुखादिरहितः क्वापि मते नित्यसुखान्वितः ॥
परमाणूंस्तस्य देहमाहुः केपि नभो जगुः ॥ १७ ॥
भूतावेशेन केप्याहुः केपि विष्णुशिवादिकान् ॥
स मुक्तः सर्ववित्सत्यकामः प्रत्यक्षसर्वदृक् ॥ १८ ॥
जीवो जन्यमतिर्मुक्तिं विना देहयुतः सदा ॥
प्रतिदेहं विभिन्नोऽसौ यथा कर्मसुखादिमान् ॥ १९ ॥
मनोमात्रस्य विषयः सुखदुःखादियोगतः ॥
स परम्परया देहादीनाञ्चैतन्यदायकः ॥ २० ॥
प्रवृत्त्याद्यैरसावन्यदेहेषु त्वनुमीयते ॥
असद्रूपतया तं तु शून्यम्माध्यमिका विदुः ॥ २१ ॥
विज्ञानं क्षणिकं योगाचारास्तं वासनान्वितम् ॥
ज्ञानानुमेयं क्षणिकं बाह्यं सौत्रान्तिकास्तु तम् ॥ २२ ॥
चार्वाकास्तं स्थूलदेहमिन्द्रियाणि तु केचन ॥
मनः परे प्राणमन्ये देहमानं च केचन ॥ २३ ॥
त्यक्तं विस्तरभीत्यात्र सप्तभङ्गीनयादिकम् ॥
अकर्त्ता चैतन्यमात्मा कर्त्री तु प्रकृतिर्जडा ॥ २४ ॥
तद्योगाच्च करोमीति मिथ्याधीरिति सांख्यगीः ॥
चैतन्यमेकं ब्रह्मैवाविद्यया जीव उच्यते ॥ २५ ॥
तत्राध्यस्तं जगन्मिथ्या भाति वेदान्तवागसौ ॥
मनः प्रत्यात्मनियतमनेकम्परमाणु च ॥ २६ ॥

वेदान्तिनो मध्यमानमामुक्ति स्थिरमूचिरे ॥
तमोऽधिकं द्रव्यमाहुस्तेजोभावे गतं हि तत् ॥ २७ ॥
द्रवान्ताः संस्कारयुक्ता भूमौ के गन्धवर्जिताः ॥
सस्नेहाश्चाग्नौ तु गुरुरसस्नेहोनिता अमी ॥ २८ ॥
वायौ ते द्रुतिरूपोनाः शब्दः संख्यादिपञ्च खे ॥
विशब्दास्ते कालदिशोस्ते बुद्ध्याद्याश्च देहिनि ॥ २९ ॥
संख्याद्याः पंच बुद्धीच्छायत्नाश्चेशेऽथ चेतसि ॥
संख्याद्याः सप्त संस्कारश्चेति द्रव्यगुणाः क्रमात् ॥ ३० ॥

इति द्रव्यम् ।

---

जाती रूपत्वादिशुक्लत्वाद्यन्तद्व्याप्यमप्यथ ॥
संस्कारत्वं न जातिस्स्यादिति केचन मन्वते ॥ १ ॥
रूपं शुक्लादि बहुधा चित्रमप्यपरे जगुः ॥
भूमौ सर्वप्रकारन्तदभास्वरासितञ्जले ॥ २ ॥
भास्वरन्तत्तेजसि स्यादथो रूपादिकं द्विधा ॥
ग्रीष्मोष्मादावनुद्भूतमुद्भूतन्तद्घटादिषु ॥ ३ ॥
रसोम्लादिर्बहुविधः पृथिवीजलयोः स्थितः ॥
पृथिव्यां सर्वप्रकारो जले तु मधुरः परम् ॥ ४ ॥
अम्लो निम्बुरसादौ य आश्रयात्स प्रतीयते ॥
घ्राणग्राह्यो गुणो गन्धोऽसुरभिस्सुरभिश्च सः ॥ ५ ॥
भूवृत्तिर्जलवाय्वोस्तु भूयोगादेव बुद्ध्यते ॥
स्पर्शस्त्वग्विषयस्त्रेधोष्णः शीतोऽनुष्णशीतलः ॥ ६ ॥

शीतोष्णस्तु तेजस्युष्णोऽसौ तृतीयो भूमिवातयोः ॥
कठिनाकठिनौ भेदौ संयोगेऽन्तर्भविष्यतः ॥ ७ ॥
स्पर्शान्ताः पाकजा भूमावन्यत्र स्युरपाकजाः ॥
पाकं काणादाः पराणावन्यत्रापि च गौतमाः ॥ ८ ॥
गणनव्यहारे तु हेतुः संख्याभिधीयते ॥
एकत्वानेकत्वरूपा सर्वद्रव्यगता च सा ॥ ९ ॥
संख्यास्थानं वामपश्चादेकं दश शतं तथा ॥
सहस्रमयुतं लक्षम्प्रयुतं कोटिरर्बुदम् ॥ १० ॥
अब्जं खर्वो निखर्वश्च महाब्जं शंकुसागरौ ॥
अन्त्यम्मध्यपरार्द्धश्च क्रमाद्दशगुणोत्तरम् ॥ ११ ॥
द्वित्वाद्या नैकपर्याप्ता एता व्यासज्यवृत्तयः ॥
अपेक्षाबुद्धिनाशाच्च तासान्नाशो निरूपितः ॥ १२ ॥
अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरुच्यते ॥
वस्तुतो व्यावृत्तिरूपकैवल्यं सर्ववस्तुषु ॥ १३ ॥
तदेकत्वं तत्समूहो द्वित्वादिर्न गुणात्मकः ॥
अतः सर्वपदार्थेषु वृत्तिर्नैव विरुध्यते ॥ १४ ॥
मानव्यवहृतेर्हेतुः परिमाणञ्चतुर्विधम् ॥
अणु दीर्घम्महद्ध्रस्वम्परम्मध्यञ्च तद्द्विधा ॥ १५ ॥
परे अणुत्वह्रस्वत्वे परमाणौ मनस्यपि ॥
मध्ये ते द्व्यणुके विद्यादथो दिग्गगनादिषु ॥ १६ ॥
परे महत्त्वदीर्घत्वे मध्ये ते स्तो घटादिषु ॥
अन्ये ह्रस्वत्वदीर्घत्वे नोररीकुर्वतेऽधिके ॥ १७ ॥

संख्याजन्यं द्व्यणुकादौ घटादौ परिमाणजम् ॥
परिमाणन्तूलकादौ प्रचयादपि जायते ॥ १८ ॥
तत्तुलाघनविस्तारदैर्घ्यकालजभेदतः ॥
वस्तुतः पञ्चधा तत्र तुलामानन्तु गौरवम् ॥ १९ ॥
घनमानम्महत्त्वं स्याद्विस्तारः क्षेत्रजम्फलम् ॥
दिक्कालयोः परत्वे तु दैर्घ्यकालभवे मते ॥ २० ॥
अणुत्वादिमहत्वादेरभावेऽन्तर्हितम्भवेत् ॥
संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ २१ ॥
अन्योन्याभाव एवासौ वस्तुतो न गुणान्तरम् ॥
संयोगोऽप्राप्तयोः प्राप्तिः सर्वद्रव्येषु वर्त्तते ॥ २२ ॥
मूर्त्तामूर्त्तैस्समूर्त्तानां विभूनान्तु मिथो न सः ॥
विभूनामपि संयोगम्प्राहुर्मीमांसका इह ॥ २३ ॥
स त्रिधा श्येनशैलादियोगोऽन्यतरकर्मजः ॥
यो मेषसन्निपातादिर्ज्ञेयः सोभयकर्मजः ॥ २४ ॥
संयोगजस्तु हस्तद्रुयोगाद्योगो द्रुकाययोः ॥
अभिघातः शब्दहेतुः शब्दाहेतुस्तु नोदनम् ॥ २५ ॥
इति कर्मोद्भवो द्वेधाऽथो संयोगविनाशकः ॥
विभागः संयोगवत्स त्रिधान्यतरकर्मजः ॥ २६ ॥
द्विकर्मजो विभागोत्थश्चेत्यथान्त्योपि स द्विधा ॥
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ २७ ॥

---

१ सोचि लोपे चेदिति सूत्रेण सुलोपः ।

कपालयोर्विभागाद्यो विभागः खकपालयोः ॥
स आद्योऽन्त्यस्तु हस्तङ्गुविभागाङ्गुशरीरयोः ॥ २८ ॥
वस्तुतस्त्वेष संयोगध्वंस एवास्ति नापरः ॥
अतो ध्वंस इव स्पष्टमनन्तोप्येष दृश्यते ॥ २९ ॥
परापरव्यपहृतेरसाधारणकारणे ॥
परत्वं चापरत्वञ्च द्विधा ते अपि कीर्तिते ॥ ३० ॥
दैशिके कालिके चापि मूर्त्त एव तु दैशिके ॥
परत्वम्मूर्त्तसंयोगभूयस्त्वज्ञानतो भवेत् ॥ ३१ ॥
अपरत्वन्तदल्पत्वबुद्धितः स्यादितीरितम् ॥
दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ ३२ ॥
परत्वमपरत्वन्तु तदल्पत्वप्रतीतितः ॥
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥ ३३ ॥
वस्तुतस्त्विह संयुक्तमूर्तसूर्यक्रियागते ॥
बहुत्वाल्पत्वे अमूस्तस्तत्त्वन्तु प्रागुदीरितम् ॥ ३४ ॥
गुरुत्वमाद्यपतनासमवायि धराम्बुगम् ॥
अतीन्द्रियम्माषकादिभेदतस्तदनेकधा ॥ ३५ ॥
वृन्ताम्रादौ च बाणादौ हस्तोद्धृतघटादिषु ॥
संयोगवेगप्रयत्नाः पतनप्रतिबन्धकाः ॥ ३६ ॥
स्यन्दनासमवायि स्याद्द्रवत्वं क्ष्मादिकत्रये ॥
सांसिद्धिकन्तज्जले नैमित्तिकं क्षितितेजसोः ॥ ३७ ॥
नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु ॥
द्रवत्वं स्नेहसहितं हेतुश्चूर्णादिपिण्डने ॥ ३८ ॥

स्नेहः पिण्डीभावहेतुर्जलमात्रे स वर्त्तते ॥
तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ ३९ ॥
पिण्डने द्रवता मुख्यो हेतुः स्नेहः क्षितावपि ॥
त्वङ्मात्रगम्यः स्पर्शान्यः स्नेह इत्यस्ति वस्तुतः ॥ ४० ॥
श्रोत्रग्राह्यो गुणः शब्दो ध्वनिर्वर्ण इति द्विधा ॥
पुनस्त्रिधाद्यः संयोगात्स भेरीदण्डयोर्यथा ॥ ४१ ॥
विभागजो वेणुदलद्वयेऽथो शब्दजस्तु सः ॥
वीचीतरंगवच्छब्दानन्तरं यः समुद्भवेत् ॥ ४२ ॥
विवक्षवात्मेरितस्वान्ताहताग्निचलितो मरुत् ॥
व्यनक्ति याम्मूलदेशे सा वाणी कथ्यते परा ॥ ४३ ॥
नाभौ व्यनक्ति पश्यन्तीम्मध्यमां हृदये व्रजन् ॥
मूर्द्धाघातान्मुखम्प्राप्तः स्पष्टवर्णां स वैखरीम् ॥ ४४ ॥
बुद्धिः पश्चाद्वर्णनीया सुखं जीवगतम्मतम् ॥
मनोगम्यश्चतुर्द्धा तत्पूर्वं विषयभोगजम् ॥ ४५ ॥
राज्यादिगर्वजम्भोग्यमनोरथसमुद्भवम् ॥
अभ्यासजं चापरे तु नित्यमीशे जगुः सुखम् ॥ ४६ ॥
दुःखं जीवे मनोगम्यमिच्छा द्वेधेशजीवगा ॥
आद्या तु सर्वविषया सर्वदा सफलापि च ॥ ४७ ॥
अन्त्या तु न तथाभूता पुनरिच्छा द्विधा भवेत् ॥
उपायेच्छा फलेच्छा च दुःखात्ययसुखे फले ॥ ४८ ॥
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ॥
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ ४९ ॥

प्रवृत्तिहेतुरिच्छा स्याच्चिकीर्षाऽत्र तु कारणम् ॥
कृतिसाध्यत्वधीरिष्टसाधनत्वमतिस्तथा ॥ ५० ॥
बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबंधिका ॥
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ ५१ ॥
द्वेषो जीवगतो द्वेधा दुःखे तत्कारणे च सः ॥
क्रोधः स एव द्विष्टार्थसाधनीभूतचेतने ॥ ५२ ॥
प्रयत्न आत्मवृत्तिः स इच्छेवेश्वरजीवगः ॥
ईशगः सर्वविषयः सर्वदा सफलोपि च ॥ ५३ ॥
जीवप्रयत्नो न तथा त्रिविधोऽसौ प्रकीर्त्तितः ॥
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ ५४ ॥
चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ॥
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकम्भवेत् ॥ ५५ ॥
प्रयत्न एवोत्साहो यः सुखकारणकर्मणि ॥
प्रयत्नाभाव आलस्यमन्तर्भवति नाधिकम् ॥ ५६ ॥
निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः ॥
तृतीयोऽतीन्द्रियो यत्नः प्राणसञ्चारकारणम् ॥ ५७ ॥
अदृष्टप्राणक्रियाभ्याङ्गतार्थोयमितीतरे ॥
जानात्यथेच्छति ततो यतते क्रमतो जनः ॥ ५८ ॥
धर्म्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥
यागादिर्गंगास्नानादिव्यापारः स तु कीर्त्तितः ॥ ५९ ॥
भोगपापादिनाश्योऽसावधर्मो नरकादिकृत् ॥
प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती इमौ गुणौ ॥ ६० ॥

इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ॥

संस्कारस्त्रिविधो वेगः स्थितिस्थापकभावने ॥ ६१ ॥

मूर्त्तवृत्तिर्द्विधा वेगः कर्मजः स शरादिषु ॥

वेगशालिकपालोत्थे वेगजः स घटादिके ॥ ६२ ॥

जन्यमूर्तेषु द्विधापि कर्मजो ह्यपराणुषु ॥

त्वग्दृग्ग्राह्यश्चापि वेगोऽथ स्थितिस्थापकः क्षितौ ॥ ६३ ॥

चतुर्षु वातीन्द्रियश्च क्वचित्स्पन्देपि कारणम् ॥

स चाकृष्टस्य शाखादेर्यथापूर्वनिवेशकः ॥ ६४ ॥

भावनातीन्द्रिया जीवे विशिष्टानुभवोद्भवा ॥

व्यापारोऽनुभवस्यासौ स्मरणप्रत्यभिज्ञयोः ॥ ६५ ॥

असौ सदृशसंबन्धिदर्शनाद्दृष्टचिन्तनैः ॥

उद्बुध्यतेऽथ रोगेण समयेन च नाश्यते ॥ ६६ ॥

इति गुणाः।

---

सृष्टेश्चिकीर्षयेशस्य विश्लिष्टेषु मिथः पुरा ॥

परमाणुषु सर्वेषूद्भवत्यारम्भिका क्रिया ॥ १ ॥

तेषु द्वयोर्द्वयोर्योगाज्जायन्ते द्व्यणुकास्ततः ॥

त्रित्रिभ्यो द्व्यणुकेभ्यस्तु त्र्यणुकानां समुद्भवः ॥ २ ॥

एवं क्रमान्महाभूमिजलतेजोऽनिलोद्भवः ॥

प्रलये तु परेशस्य लोकानां सञ्जिहीर्षया ॥ ३ ॥

पराणुष्वेव चारम्भप्रतिद्वन्द्विक्रिया भवेत् ॥

तेषान्द्वयोर्द्वयोर्योगनाशाद्व्यणुकनाशनम् ॥ ४ ॥

क्रमेण त्र्यणुकादीनां नाशादेवं भवेल्लयः ॥
दोधूयमानास्तिष्ठन्ति नित्यास्ते परमाणवः ॥ ५ ॥
सर्वकार्यद्रव्यनाशरूपोऽसावान्तरो लयः ॥
अनित्यकार्यमात्रस्य नाशमाहुर्महालयम् ॥ ६ ॥
नैयायिका अथान्ये तु चतुर्द्धा लयमूचिरे ॥
दैनं दिनोऽन्वहम्प्राणिनाशो ब्राह्मो विधेर्निशि ॥ ७ ॥
विधेर्मृतौ प्राकृतिको मोक्ष आत्यन्तिको लयः ॥
मीमांसका अनादित्वान्नोचुः सृष्टिलयाविह ॥ ८ ॥
परमाणुगणैरेव सिद्धम्भूमिघटादिकम् ॥
तदन्यकल्पनापार्थेत्यादिबौद्धमतं वचः ॥ ९ ॥
स्युर्नित्या एव खात्पंच सामान्याद्यास्त्रयोपि च ॥
अन्योन्यात्यन्ताभावौ चाथानित्या एव वासना ॥ १० ॥
सुखदुःखद्वेषवेगास्संयोगादिचतुष्टयम् ॥
द्वित्वाद्या द्विपृथक्त्वाद्या गन्धनैमित्तिकद्रवाः ॥ ११ ॥
अदृष्टं शब्दकर्मप्रागभावा ध्वंस एव च ॥
नित्यानित्याः परे तत्र नित्याः क्ष्माद्याः पराणवः ॥ १२ ॥
तत्स्थं सिद्धद्रवस्नेहस्थितिस्थापकगौरवम् ॥
तथा रूपरसस्पर्शा भूम्यन्यपरमाणुगाः ॥ १३ ॥
पराणुविभ्वेकत्वैकपृथक्त्वे परिमाणकम् ॥
ईशस्येच्छाज्ञानयत्ना अनित्या इतरे मताः ॥ १४ ॥
अनन्यथासिद्धकार्यपूर्ववर्त्ति च कारणम् ॥
तत्त्रिधा समवाय्यत्रासमवायिनिमित्तकम् ॥ १५ ॥

समवेतं यत्र कार्यञ्जायते समवायि तत् ॥
घटादेस्तु कपालाद्यं स्वगन्धादेर्घटादिकम् ॥ १६ ॥
सांख्यवेदान्तयोः कार्यैरभेदः समवायिनाम् ॥
कणादन्यायमतयोर्भेद एव समर्थितः ॥ १७ ॥
यत्कारणं तु कार्येण वा कार्यसमवायिना ॥
एकत्रार्थे सहासन्नम्भवेदसमवायि तत् ॥ १८ ॥
यथा कपालसंयोगोऽसमवायी घटम्प्रति ॥
कपालरूपादिकं तु घटरूपादिकम्प्रति ॥ १९ ॥
उक्तान्यो हेतुर्न्निमित्तं यथा दण्डो घटम्प्रति ॥
निमित्तानि द्विधा प्रोक्तान्यत्र साधारणानि तु ॥ २० ॥
निमित्तानीश्वरस्तस्य ज्ञानेच्छाकृतयोपि च ॥
प्रतिबन्धकसंसर्गाभावोदृष्टश्च देहिनाम् ॥ २१ ॥
कार्यमात्रेप्यमी कालप्रागभावदिशोपि च ॥
असामान्यनिमित्तानि दंडादीनि घटादिषु ॥ २२ ॥
त्रिधैतद्भावकार्यस्याभावस्य त्वन्त्यमेव तत् ॥ २३ ॥
नावश्यकत्वं केप्याहुर्भावेप्यसमवायिनः ॥
अन्यथासिद्धस्त्ववश्यकॢप्तप्राग्वर्त्तितोऽपरः ॥ २४ ॥
यथा घटम्प्रति व्योमकुलालजनकादिकः ॥
एतेनैव गतार्थत्वान्नेतरे कथिता इह ॥ २५ ॥
व्यापारवदसामान्यकारणं करणम्मतम् ॥
यथा दण्डादिकं कुम्भे तुरीवेमादिकं पटे ॥ २६ ॥

व्यापारस्तज्जन्यस्य हेतुस्तज्जन्यो द्रव्यतोऽपरः ॥
यथा चक्रादेर्भ्रमणं वासनानुभवस्य च ॥ २७ ॥
स्वरूपयोग्यं च फलोपधायकमिति द्विधा ॥
कारणं स्याद्यथा दण्डोऽरण्ये गेहे च संस्थितः ॥ २८ ॥
सर्वावयविनां स्वस्वावयवाः समवायिनः ॥
स्वस्वावयवसंयोगास्तेषामसमवायिनः ॥ २९ ॥
समवाय्याश्रयद्रव्यङ्कार्याणाङ्गुणकर्मणाम् ॥
स्पर्शान्ते पाकजे पाकोऽसमवायी द्रवेऽपि च ॥ ३० ॥
अथापाकभवेष्वेषु गुरुत्वपरिमाणयोः ॥
स्नेहस्थितिस्थापकयोरेकत्वैकपृथक्त्वयोः ॥ ३१ ॥
स्वाश्रयद्रव्यावयवगता निजसजातयः ॥
स्वहेतुगतमेकत्वं तादृशैकपृथक्त्वकम् ॥ ३२ ॥
द्वित्वादौ द्विपृथक्त्वादौ प्रयांत्यसमवायिताम् ॥
परिमाणे तु संख्या स्याद् द्व्यणुकत्र्यणुकस्थिते ॥ ३३ ॥
तूलादिसंस्थे प्रचयोऽथो परत्वापरत्वयोः ॥
संयोगः पिण्डेन कालदिशोः कालदिगुत्थयोः ॥ ३४ ॥
वेगे संयोगे विभागे कर्मजे कर्म कीर्त्तितम् ॥
अन्यत्र वेगसंयोगविभागाः कारणस्थिताः ॥ ३५ ॥
विभागसंयोगशब्दैर्जाते शब्दे क्रमेण ते ॥
बुद्ध्यादौ जीवगे जीवमनःसंयोग ईरितः ॥ ३६ ॥
संयोगवेगद्रवतागुरुत्वानि तु कर्मणि ॥
अभिघातः कुठारादेर्यथा वंशादिकर्मसु ॥ ३७ ॥

ज्यानोदनाख्यः संयोगो यथा बाणादिकर्मणि ॥
देहकर्मणि संयोगः प्रयत्नवत आत्मनः ॥ ३८ ॥
प्रयत्नवत ईशस्य संयोगस्त्वणुकर्मणि ॥
गुरुत्वमाद्यपतने स्यन्दने द्रवता मता ॥ ३९ ॥
द्वितीये पतने स्यन्दे वेग इत्यादि बुध्यताम् ॥
निमित्तानीश्वरादीनि सर्वत्रायान्ति हेतुताम् ॥ ४० ॥
विशेषतस्तु द्वित्वादौ द्विपृथक्त्वादिके तथा ॥
परत्वे चापरत्वे चापेक्षाबुद्धिरपीष्यते ॥ ४१ ॥
सुखे धर्म्मः सुविषया दुःखे त्वेतद्विपर्ययः ॥
भावनायामनुभवो द्वेषे दुःखकरत्वधीः ॥ ४२ ॥
धर्मे यागादि पापे तु हिंसादिरथ तद्द्वये ॥
मिथ्याधीजा वासनापि चिकीर्षाद्यम्प्रवर्त्तने ॥ ४३ ॥
निवृत्तौ द्वेषादिरिच्छायत्नयोरिष्टहेतुधीः ॥
द्रव्यनाशे हेतुमाहुर्विनाशं समवायिनः ॥ ४४ ॥
द्व्यणुकस्य विनाशे चासमवायिविनाशनम् ॥
नव्या हेतुन्ध्वंसमाहुस्सर्वत्रासमवायिनः ॥ ४५ ॥
आश्रयध्वंसतः सर्वे नश्यन्त्यथ विशेषतः ॥
अत्यग्नियोगाग्नियोगनाशाभ्यां हैतुकद्रवः ॥ ४६ ॥
विभागोन्यदेशयोगात्संयोगस्तु विभागतः ॥
स्पर्शान्तं पाकतो नश्येत्परमाणु महीगतम् ॥ ४७ ॥
अपेक्षाबुद्धिजास्तस्या नाशाद्वेगः स्वकर्मणः ॥
दिक्कालपिण्डसंयोगनाशादपि परापरे ॥ ४८ ॥

प्रायश्चित्तादेरधर्मो धर्मः स्वकथनादितः ॥
भोगात्तत्त्वज्ञानतो द्वौ भावना चरमस्मृतेः ॥ ४९ ॥
सा कालाद्रोगतश्चापि योग्या विभुगुणास्तु ये ॥
स्वानन्तरोत्पन्नगुणान्नश्यन्तीति व्यवस्थितिः ॥ ५० ॥
उपान्त्यशब्दादन्त्यस्य नाशः प्राचाम्मते मतः ॥
नव्या उपान्त्यशब्दस्य ध्वंसात्तन्नाशमूचिरे ५१ ॥
कर्म तूत्तरसंयोगात्तथा स्वोत्पन्नवेगतः ॥
नश्यतीत्याद्यनुक्तं च ज्ञेयं विज्ञोपदेशतः ॥ ५२ ॥
समवायः संयोगस्तथा स्वरूपादयश्च सम्बन्धाः ॥
वृत्तिनियामकसञ्ज्ञाविशिष्टबुद्धेर्नियामका ज्ञेयाः ॥ ५३ ॥
स सम्बन्धस्यानुयोगी सम्बन्धो यत्र वस्तुनः ॥
यस्य वस्तुनि सम्बन्धः प्रतियोगी स कीर्त्यते ॥ ५४ ॥
यथा कपाले सम्बन्धः समवायो घटस्य हि ॥
अनुयोगी कपालोऽस्य प्रतियोगी घटः स्मृतः ॥ ५५ ॥
समवायो यत्र येषाम्प्रागुक्तस्तत्र तेऽखिलाः ॥
समवायेन वर्त्तन्ते द्रव्येष्विव गुणादयः ॥ ५६ ॥
संयोगेन च वर्त्तन्ते भूतलादौ घटादयः ॥
अन्ये स्वरूपसम्बन्धा गौणास्सम्बन्धिरूपिणः ॥ ५७ ॥
द्विविधः स्वरूपसंज्ञः केवलरूपस्तथा विशेषणता ॥
आद्यो भावाभावान्यतरप्रतियोगिको ज्ञेयः ॥ ५८ ॥
स्याद्विशेषणता त्रेधा दैशिकी दिक्कृता तथा ॥
कालिक्यथादिमा तु स्यादभावप्रतियोगिका ॥ ५९ ॥

दिशानुयोगिका मध्याऽन्त्या तु कालानुयोगिका ॥
उभे अमू जन्यमात्रप्रतियोगिकताङ्गते ॥ ६० ॥
इमावेव तु सम्बन्धौ सर्वाधारत्वबोधकौ ॥
ताभ्याम्पदार्थास्तिष्ठन्ति क्रमेण दिगनेहसोः ॥ ६१ ॥
विषयत्वं विषयिता प्रतियोग्यनुयोगिते ॥
निरूपकनिरूप्यत्वे तादात्म्यं च विरोधिता ॥ ६२ ॥
इत्यादयस्तु सम्बन्धा ज्ञेया वृत्त्यनियामकाः ॥
शेषः सम्बन्धविषयो ज्ञेयो विज्ञोपदेशतः ॥ ६३ ॥
लाघवं त्रिविधन्तत्र यथा सम्बन्धलाघवात् ॥
दण्ड एव घटे हेतुर्दंडत्वन्तु न गौरवात् ॥ ६४ ॥
अनेकद्रव्यसमवेतत्वं गौरवदूषितम् ॥
अतो महत्त्वं प्रत्यक्षे हेतुः शारीरलाघवात् ॥ ६५ ॥
न रूपस्य प्रागभावो हेतुर्गन्धेऽग्नियोगजे ॥
किं तु गन्धप्रागभाव उपस्थितिजलाघवात् ॥ ६६ ॥
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥
द्रव्यादयः पञ्चभावा अनेके समवायिनः ॥ ६७ ॥
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥
सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ॥ ६८ ॥
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ ६९ ॥
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ॥
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥ ७० ॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ॥
क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ ७१ ॥
क्षितिर्जलन्तथा तेजः पवनो मन एव च ॥
परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी ॥ ७२ ॥
कालखात्मदिशां सर्वगतत्वम्परमम्महत् ॥
क्षित्यादिपञ्चभूतानि चत्वारि स्पर्शवन्ति हि ॥ ७३ ॥
द्रव्यारम्भश्चतुर्षु स्यादथाऽऽकाशशरीरिणाम् ॥
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ ॥७४ ॥
रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ॥
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ ७५ ॥
आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ॥
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ ७६ ॥
अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः ॥
संख्यादयो विभागान्ता मूर्त्तामूर्तगुणाः स्मृताः ॥ ७७ ॥
अमूर्त्तानान्तु शब्दाद्या नव भावनया युताः ॥
शेषा मूर्त्तगुणा ज्ञेया अथानेकाश्रिता गुणाः ॥ ७८ ॥
द्वित्वाद्या द्विपृथक्त्वाद्याः संयोगश्च विभागयुक् ॥
अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ॥ ७९ ॥
बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥
अदृष्टभावनाशब्दा मता वैशेषिका गुणाः ॥ ८० ॥
संख्यादिरपरत्वान्तो द्रवो नैमित्तिकस्तथा ॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्त्तिताः ॥ ८१ ॥

संख्यादिरपरत्वांतो द्रवत्वं स्नेह एव च ॥
एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः ॥ ८२ ॥
बाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः ॥
अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः ॥
अकारणगुणोत्पन्ना एते तु परिकीर्त्तिताः ॥ ८३ ॥
अपाकजास्तु स्पर्शांता द्रवत्वं च तथाविधम् ॥
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥ ८४ ॥
स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः ॥
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥ ८५ ॥
स्पर्शांतपरिमाणैकपृथक्त्वं स्नेहशब्दके ॥
भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ८६ ॥
आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः ॥
वेगेपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ८७ ॥
द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् ॥
वैशेषिको विभुगुणः संयोगादिद्वयन्तथा ॥ ८८ ॥

इति सृष्ट्यादिसाधारणप्रकरणम् ।

---

बुद्धिर्द्विधेशे जीवे च तत्रेशेऽध्यक्षरूपिणी ॥
यथार्था सर्वविषया जीवे तु द्विविधा भवेत् ॥ १ ॥
अनुभूतिः स्मृतिश्च स्यादनुभूतिर्द्विधा भवेत् ॥
यथार्था चायथार्था च चतुर्द्धाद्या प्रमाभिधा ॥ २ ॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ॥
न्यायमार्गेऽनुमित्यादिः परोक्षैव निगद्यते ॥ ३ ॥

प्रमायाः करणम्प्रोक्तम्प्रमाणन्तच्चतुर्विधम् ॥
प्रत्यक्षमनुमानञ्चोपमानं शब्द एव च ॥ ४ ॥
प्रत्यक्षाख्यप्रमायास्तु करणानीन्द्रियाणि षट् ॥
घ्राणजादिप्रभेदेन षट् प्रत्यक्षप्रमा अपि ॥ ५ ॥
प्रत्यक्षन्द्विविधन्निर्विकल्पकं सविकल्पकम् ॥
आद्यम्प्रकारताशून्यं संबन्धानवगाहि च ॥ ६ ॥
घटं घटत्वञ्च पृथग्विषयी कुरुते यतः ॥
विशेषणज्ञानहेतोरनुमानेन कल्पितम् ॥ ७ ॥
अयं घट इति ज्ञानं यद्घटत्वप्रकारकम् ॥
सविकल्पकमाहुस्तद्विशिष्टज्ञानमित्यपि ॥ ८ ॥
ततोऽनुव्यवसायाख्या घटं वेद्मीति या मतिः ॥
सविकल्पन्तद्विषयो निर्विकल्पन्त्वतीन्द्रियम् ॥ ९ ॥
लौकिकालौकिकाख्याभ्यां व्यापाराभ्यां भवेद्यतः ॥
लौकिकञ्चालौकिकञ्च प्रत्यक्षं द्विविधन्ततः ॥ १० ॥
सन्निकर्षोऽध्यक्षहेतुर्यो भवेदिन्द्रियार्थयोः ॥
व्यापारो लौकिकाख्यः स्यात्संयोगादिः स षड्विधः॥ ११ ॥
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥
द्रव्येषु समवेतानां तथा तत्समवायतः ॥ १२ ॥
तत्रापि समवेतानां शब्दस्य समवायतः ॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ॥ १३ ॥
विशेषणतयाध्यक्षमभावसमवाययोः ॥
युज्यते मनसात्मा प्रागिन्द्रियेण मनस्ततः ॥ १४ ॥

इन्द्रियं विषयेणातः परम्प्रत्यक्षसम्भवः ॥
इन्द्रियार्थावयविनौ तयोरवयवाश्च ये ॥ १५ ॥
तेषां संयोगादधिकात्परिमाणग्रहो भवेत् ॥
तदभावादेव दूरवृक्षादेर्ह्रस्वतामतिः ॥ १६ ॥
दूरत्वं दोषमेवात्र नवीनाः कारणं जगुः ॥
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ॥ १७ ॥
तथा रसो रसज्ञायास्तथा शब्दोपि च श्रुतेः ॥
यस्य धीर्येनेन्द्रियेण तेन तज्जात्यभावयोः ॥ १८ ॥
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ॥
विभागसंयोगपरापरत्वं स्नेहो द्रवत्वं परिमाणयुक्तम् ॥१९॥
क्रियाजातिर्योग्यवृत्तिः समवायश्च तादृशः ॥
संबंधश्चाक्षुषे हेतुरालोकोद्भूतरूपयोः ॥ २० ॥
उद्भूतस्पर्शवद्द्रव्यं स्पर्शोप्युद्भूतसञ्ज्ञकः ॥
चक्षुर्ग्राह्यश्च रूपान्यत्सर्वं त्वग्गोचरः स्मृतः ॥ २१ ॥
त्वग्जे द्रव्यग्रहे प्राचो रूपस्पर्शौ प्रचक्षते ॥
महत्त्वं सर्वप्रत्यक्षे हेतुः सर्वमते स्थितः ॥ २२ ॥
त्वचा सह मनोयोगो ज्ञानसामान्यकारणम् ॥
बुद्ध्यादिषु क मात्मा च मनोमात्रेण गृह्यते ॥ २३ ॥
उपनेत्रादिना स्वच्छद्रव्येण नयनेन्द्रियम् ॥
न रुध्यते दर्पणे तु परावृत्यास्यमीक्षते ॥ २४ ॥
दूरान्तिकपृथुत्वादिज्ञानन्दोषवशाद्भवेत् ॥
अभावग्रहणे योग्यानुपलब्धिरपेक्ष्यते ॥ २५ ॥

यदि स्यादुपलभ्येतेत्येवं यत्र प्रयुज्यते ॥
व्यापारो लौकिकस्त्वेधात्राद्यः सामान्यलक्षणः ॥ २६ ॥
घटग्रहे घटत्वेन ज्ञायन्ते सकला घटाः ॥
शुक्तौ रूप्यग्रहे सर्वरूप्यज्ञानञ्च जायते ॥ २७ ॥
निम्बेक्षणे तिक्तताया भाने स्याज्ज्ञानलक्षणः ॥
तृतीयो योगजो द्वेधा युक्तयुञ्जानभेदतः ॥
युक्तस्य सर्वदा भानं चिन्तासहकृतोपरः ॥ २८ ॥

इति प्रत्यक्षम् ।

महानसादौ धूमाग्न्योर्व्याप्तिं यः प्राग्गृहीतवान् ॥
स गत्वा पर्वतन्तत्र दीर्घन्धूमं व्यलोकत ॥ १ ॥
यत्र धूमस्तत्र वह्निरिति व्याप्तिं ततोऽस्मरत् ॥
ततो वह्निव्याप्यधूमयुक्तोयं गिरिरित्यसौ ॥ २ ॥
परामर्शो जायतेऽथानुमितिर्गिरिरग्निमान् ॥
पर्वतो वह्निमान्धूमान्महानसवदित्यमी ॥
पक्षः साध्यं च हेतुश्च दृष्टान्तः क्रमतो मताः ॥ ३ ॥
व्यापारोऽत्र परामर्शः करणं व्याप्तिधीर्भवेत् ॥
सैवानुमानं केचित्तु परामर्शन्तदूचिरे ॥ ४ ॥
व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ॥ ५ ॥
अन्वये हेतुमन्निष्ठविरहाप्रतियोगिना ॥
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६ ॥
साध्याभावव्यापको योऽभावस्तत्प्रतियोगिता ॥
व्यतिरेके व्याप्तिरुक्ता दूषितोदयनेन सा ॥ ७ ॥

यत्र वह्निर्नास्ति तत्र धूमो नास्तीत्युदाहृतिः ॥
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ॥
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥ ८ ॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ॥
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ ९ ॥
सिसाधयिषया शून्या सिद्धिर्यत्र न तिष्ठति ॥
स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ १० ॥
पक्षस्तु पक्षतावान्स्याद्यथा प्रोक्तस्थले गिरिः ॥
स पक्षो निर्णीतसाध्यो विपक्षस्तदभाववान् ॥ ११ ॥
आद्यो महानसादिः स्याद्द्वितीयस्तु ह्रदादिकः ॥
व्यभिचारस्याग्रहोऽथ सहचारग्रहस्तथा ॥
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छंकानिवर्त्तकः ॥ १२ ॥
इति स्वार्थानुमानं स्यात्परार्थे तु परं प्रति ॥
प्रतिज्ञादि वचस्तत्र प्रतिज्ञा पर्वतोऽग्निमान् ॥ १३ ॥
धूमवत्त्वादिति हेतुरथ योयोऽस्ति धूमवान् ॥
ससोऽग्निमान् यथा पाकस्थानमेतदुदाहृतिः ॥ १४ ॥
उपनीतिस्तथा चायं पर्वतो धूमवानिति ॥
तस्माद्वह्निव्याप्यधूमवत्त्वादेषोपि वह्निमान् ॥ १५ ॥
इति प्रोक्तन्निगमनमेतानवयवान्विदुः ॥ १६ ॥
त्रिधानुमानन्तत्रासद्विपक्षं केवलान्वयि ॥
यथात्र कुंभोऽभिधेयः प्रमेयत्वात्पटादिवत् ॥ १७ ॥

असत्सपक्षन्तु तादृग्व्यतिरेकि यथा क्षितिः ॥
अन्याभिन्ना गन्धवत्त्वादन्याभिन्नं न यद्भवेत् ॥ १८ ॥
न गन्धवत्तद्यथाम्बु न चेयन्तु तथाविधा ॥
तस्मान्नान्यभिन्नाभिन्नेत्यादिरीत्यान्यदुन्नयेत् ॥ १९ ॥
सत्सपक्षविपक्षं यदन्वयव्यतिरेकि तत् ॥
यथाद्रिर्वह्निमान्धूमादिति पूर्वोदितस्थले ॥ २० ॥
हेतुना साध्यसंसिद्धौ न हेतुस्तदभावयोः ॥
व्याप्तिरित्यन्वयव्याप्तिरेवेत्युदयनो जगौ ॥ २१ ॥
अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ॥
कालात्ययापदिष्टश्च हेत्वाभासस्तु पंचधा ॥ २२ ॥
आद्यः साधारणस्तु स्यादसाधारणकोपरः ॥
तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ २३ ॥
यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः ॥
यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः ॥ २४ ॥
तथैवानुपसंहारी केवलान्वयिपक्षकः ॥
शैलोऽग्निमान्प्रमेयत्वान्मनो नित्यममनस्त्वतः ॥
सर्वन्नाशि प्रमेयत्वादित्युदाहरणं क्रमात् ॥ २५ ॥
यः साध्यवति न तिष्ठेत्स विरुद्धः स्याद्यथा हि कृतकत्वात् ॥
नित्यः शब्दः सत्प्रतिपक्षः स्वविरुद्धसाध्यकोन्यश्चेत् ॥ २६ ॥
नित्यः शब्दः श्रावणत्वादनित्यः कृतकत्वतः ॥
आश्रयासिद्धादिभेदादसिद्धस्त्रिविधो मतः ॥ २७ ॥

आश्रयासिद्धस्तु पक्षो यत्र व्योमसरोजवत् ॥
स्वरूपासिद्धस्तु पक्षावृत्तिर्बहुविधश्च सः ॥ २८ ॥
शब्दो गुणश्चाक्षुषत्वादित्यादिः स्यादुदाहृतिः ॥
उपाधिः साधनाव्यापी साध्यव्यापी च यो भवेत् ॥२९॥
तद्वांस्तु व्याप्यत्वासिद्धोऽद्रिस्सधूमोऽग्निमत्त्वतः ॥
व्यभिचारस्याऽनुमानमुपाधेस्तु प्रयोजनम् ॥ ३० ॥
बाधितः पक्षे विसाध्येऽनुष्णोऽग्निर्द्रव्यभावतः ॥

इत्यनुमानम् ।

---

गवयो गोसदृगिति श्रुत्वा गतवतो वनम् ॥
गवयं पश्यतस्तस्मिन्गोसादृश्यमतिर्भवेत् ॥ १ ॥
ततोऽतिदेशवाक्यार्थस्मरणन्तस्य जायते ॥
गवयो गवयस्यार्थ इति शक्तिग्रहस्ततः ॥ २ ॥
भवेदुपमितिः सञ्ज्ञासञ्ज्ञिसम्बन्धधीः फलम् ॥
उपमानन्तत्करणङ्गोसादृश्यमतिर्यथा ॥ ३ ॥
व्यापारस्त्वतिदेशाख्यवाक्यार्थस्मरणम्मतम् ॥
करणं केऽप्यतिदेशवाक्यार्थं मेनिरे परम् ॥ ४ ॥
वेदान्तिनस्तु करणङ्गवये गोसदृङ्मतिम् ॥
फलङ्गवयसादृश्यमतिं गवि चचक्षिरे ॥ ५ ॥
तत्रिधा क्वापि यादृश्याद्यथा स्याद्गवयादिषु ॥
खड्गादौ नासिकाशृङ्गाद्यसाधारणधर्मतः ॥ ६ ॥
लंबग्रीवादिवैधर्म्यादुष्ट्रादौ शक्तिधीर्भवेत् ॥
सांख्या वैशेषिकाश्चानुमानेनाहुर्गतार्थताम् ॥ ७ ॥

इत्युपमानम् ।

शब्दः प्रमाणमाप्तोक्तं वाक्यमाप्तो यथार्थवाक् ॥
वाक्यन्तु योग्यताकांक्षासन्नियुक्तः पदोच्चयः ॥ १ ॥
शक्तं पदन्दधि यथा प्रकृतिप्रत्ययाद्यपि ॥
अतोत्र क्त्वादेः पदत्वम्पचत्यादेश्च वाक्यता ॥ २ ॥
वैदिकं लौकिकं चेति वाक्यं द्वेधाऽथ लौकिकम् ॥
आप्तोक्तमेव प्रमाणं वैदिकं सर्वमेव तत् ॥ ३ ॥
सर्वज्ञ ईशो वेदस्य कर्त्ता न्यायविदाम्मते ॥
मीमांसकैस्तु वेदस्य नेष्यते पौरुषेयता ॥ ४ ॥
स्मृत्यादीनां प्रमाणत्वं वेदमूलकतावशात् ॥
विधिर्मन्त्रोर्थवादश्च त्रिविधं वैदिकं वचः ॥ ५ ॥
लिङ्तव्यादियुतन्तत्तु विधिः स्यात्त्रिविधश्च सः ॥
अपूर्वोऽत्यन्तमप्राप्तौ नियमः पाक्षिके सति ॥
तत्र चान्यत्र च प्राप्तौ परिसंख्याविधिर्मतः ॥ ६ ॥
स्वर्गकामो यजेतेति व्रीहीनवहन्तीति च ॥
पञ्च पञ्चनखा भक्ष्या इत्युदाहरणं क्रमात् ॥ ७ ॥
स्तुतिनिन्दापरं वाक्यमर्थवादस्त्रिधा च सः ॥ ८ ॥
विरोधे गुणवादः स्यादनुवादोऽवधारिते ॥
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ ९ ॥
आदित्यो यूप इत्यादिरग्निर्हिमस्य भेषजम् ॥
जरायामप्ययं शूर इत्युदाहरणत्रिकम् ॥ १० ॥

शाब्दप्रमायाः करणं वाक्यं प्राञ्चः प्रचक्षते ॥
मौनिश्लोकादिसङ्गत्यै नव्याः पदधियं विदुः ॥ ११ ॥
वृत्त्या पदार्थस्मरणं द्वारं शाब्दमतिः फलम् ॥
स्मारकोऽर्थस्य सम्बन्धो वृत्तिः पदतदर्थयोः ॥ १२ ॥
वृत्तिर्द्विधा स्मृता शक्तिर्लक्षणा चेत्यथादिमा ॥
एषोऽर्थोऽस्मात्पदाद्बोध्य इतीशेच्छास्वरूपिणी ॥ १३ ॥
इच्छामात्रं सेति नव्यास्तेन साम्प्रतिकेष्वपि ॥
अपभ्रंशेषु नो शक्तिस्तत्राप्याहुः परे तु ताम् ॥ १४ ॥
समुदाये तु सा रूढिर्योगस्त्ववयवे भवेत् ॥
विप्रवत्कर्तृवज्ज्ञेया रूढिर्योगाद्बलीयसी ॥ १५ ॥
पदं त्रिधात्र प्रकृतिः प्रत्ययोऽव्ययमित्यपि ॥
प्रकृतिर्द्विविधा प्रातिपदिकन्धातुरित्यपि ॥ १६ ॥
आद्यश्चतुर्विधं रूढं यौगिकं योगरूढकम् ॥
तथा यौगिकरूढञ्च तत्राद्यं रूढिसम्भवम् ॥ १७ ॥
सैव संज्ञा त्रिधा चैत्राटिभाद्या पारिभाषिकी ॥
औपाधिकी तु दूतादिर्नैमित्तिकी गवादिका ॥ १८ ॥
योगेन यौगिकं त्रेधा कृत्तद्धितसमासजम् ॥
स्यात्पाचको दाशरथी राजपूरुष इत्यपि ॥ १९ ॥
योगरुढन्तु योगेन रूढ्या चैकार्थबोधकम् ॥
नायकः सागरो नीलकण्ठश्चेत्युक्तवत्त्रिधा ॥ २० ॥
तुर्य्यन्तु रूढियोगाभ्यां स्वातन्त्र्येणार्थबोधकम् ॥
प्राग्वत्त्रिधा मण्डपश्च मातुलः काननं यथा ॥ २१ ॥

धातुस्त्रिधा पाठसौत्रसन्नाद्यन्तभिदा स्फुटः ॥
परस्मैपद्यादिभेदात्पुनश्चैष त्रिधा मतः ॥ २२ ॥
विभक्तिधात्वंशकृत्तद्धितस्त्रीप्रत्यया इति ॥
पञ्चधा प्रत्ययास्तत्र धात्वंशः सनक्यजादिकः ॥ २३ ॥
शक्तिं जातौ तथा व्यक्तौ तत्संबंधेऽपि मन्वते ॥
जात्याकृतिविशिष्टायां व्यक्तौ तां केचनोचिरे ॥ २४ ॥
जातिव्यक्त्योरेव केचिद्व्यक्तावेवेति नूतनाः ॥
मीमांसकास्तु तां जातावाक्षेपाद्व्यक्तिबोधनम् ॥ २५ ॥
जातौ ज्ञातैव सा शाब्दबोधे याति निमित्तताम् ॥
व्यक्तौ स्वरूपेणैवेति कुब्जशक्त्यभिधायिनः ॥ २६ ॥
व्यासज्यवृत्तिधर्मेण युगपच्चन्द्रसूर्ययोः ॥
पुष्पवन्तपदाद्बोधो न नानाशक्तिकल्पनम् ॥ २७ ॥
बुद्धिस्थत्वेन धर्मेण सर्वनामपदेष्वपि ॥
बोधो भवेद्घटादीनान्नानार्थत्वं न कल्प्यते ॥ २८ ॥
युष्मदो निजसंबोध्ये शक्तिरुच्चारकेऽस्मदः ॥
उद्देश्यस्याशेषता तु सर्वशब्देन बोध्यते ॥ २९ ॥
किमो जिज्ञासिते तस्याव्ययस्य तु वितर्कणे ॥
प्रत्यक्षबुद्धिविषये शक्तिः स्यादिदमेतदोः ॥ ३० ॥
तत्पदोपस्थाप्यतया वक्तृधीविषये यदः ॥
शक्तिस्तदस्तु यच्छब्दप्रतिपाद्ये प्रकीर्त्तिता ॥ ३१ ॥
परोक्षबुद्धिविषयेऽदसोऽसौ स्वपदस्य तु ॥
समभिव्याहृतपदोपस्थाप्ये शक्तिरिष्यते ॥ ३२ ॥

केवले त्वेकशब्दस्य सजातीयान्यवर्जिते ॥
अनेकार्थे तु हर्य्यादौ स्यान्नानाशक्तिकल्पनम् ॥ ३३ ॥
इत्यादिः शक्तेः प्रपंचो बोध्यो ग्रन्थान्तरादपि ॥
व्यापारे शक्तिर्धातूनां नव्यानान्तु फलान्विते ॥ ३४ ॥
प्रत्येकमर्थन्धातूनाञ्जानीयादुपदेशतः ॥
अधिश्रयणफूत्कारादिव्यापारो यथा पचः ॥
फलं विक्लित्तिरित्येवं सर्वधातुषु बुध्यताम् ॥ ३५ ॥
द्वितीयासाकांक्षतुमुन्नन्तो धातुः सकर्म्मकः ॥
फलव्यापारयोर्धर्मिभेदेऽसौ शाब्दिकस्थितौ ॥ ३६ ॥
प्रथमार्थः सुप्सु संख्या संबोधनमपि क्वचित् ॥
उभे अपि भवेतान्ते प्रकृत्यथ विशेषणे ॥ ३७ ॥
अर्थः कर्म द्वितीयाया वृत्तित्वं प्राय इष्यते ॥
धातूनां भेदतोऽप्यत्र विभक्त्यर्थो विभिद्यते ॥ ३८ ॥
आधेयत्वं विषयत्वं विधेयत्वं च कर्त्तृता ॥
प्रतियोगित्वमित्यादीनर्थान्विद्याद्यथास्थलम् ॥ ३९ ॥
कर्त्तृत्वं करणत्वञ्च तृतीयार्थोऽस्ति कारके ॥
हेतुत्वादिर्यथास्थानमन्योपि प्रतिपद्यताम् ॥ ४० ॥
सम्प्रदानञ्चतुर्थ्यर्थः फलयोगितयेष्टता ॥
विषयत्वाश्रितत्वोद्देश्यत्वाद्यञ्च यथास्थलम् ॥ ४१ ॥
पञ्चम्यर्थोऽपादानत्वं तत्स्याद्विभागजनकत्वम् ॥
एवं प्रयोजकत्वप्रयोज्यतादि च यथास्थानम् ॥ ४२ ॥

षष्ठ्यर्थः संबंधः प्रायोऽथाधेयता तु सप्तम्याः ॥
समकालिकतादिकमपि विशेषणं प्रत्यये प्रकृत्यर्थः ४३ ॥
आदेशा एव सर्वत्र बोधकाः स्थानिनस्तु न ॥
कृतिरर्थो लकाराणां व्यापारः कृतिबाधने ॥ ४४ ॥
ज्ञानाद्यर्थादाश्रयः स्यात्कर्म शानच्शतृङोः फलम् ॥
लटस्तु वर्त्तमानत्वं भविष्यत्वञ्च लुट्लृटोः ॥ ४५ ॥
वक्त्रिच्छाविषयत्वं स्यादाशीरर्थेऽथलोट्लिङोः ॥
कृतिसाध्यत्वं प्रबलानिष्टाजनकेष्टसाधनत्वञ्च ॥ ४६ ॥
स्याद्विधिलिङोऽथ लङ्लुङ्लिटान्तु भूतत्वमविशेषात् ॥
व्याप्यया क्रियया व्यापकक्रियापादनं लृङः ॥ ४७ ॥
कर्त्तुरिच्छा सनस्तस्मादाख्यातस्याश्रयो मतः ॥
णिचः कर्तृत्वव्यापाराविच्छाक्यच्काम्यचोर्मता ॥४८॥
आचारसदृशाचारो वाच्यः क्यङ्क्यच्क्विपां समः ॥
पौनःपुन्यं यङः कर्त्तृकृतान्धात्वर्थकर्त्तृता ॥
प्राक्कालिकत्वं कर्त्ता च क्त्वार्थ इच्छाश्रयस्तुमः ॥ ४९ ॥
धात्वर्थजन्यफलवानर्थः कर्मकृताम्मतः ॥
नाथा भावकृताङ्क्ष्वित्साधुत्वायैव ते यतः ॥ ५० ॥
स्वार्थान्वयं बोधयान्ति प्रकृत्यर्थेन तद्धिताः ॥
विशेषणतया स्त्रीत्वं योनिमत्त्वमजादिषु ॥ ५१ ॥
टाबादयो द्योतयन्ति खट्वादिषु न किञ्चन ॥
विशेष्यत्वेन भार्यात्वम्मनाव्यादिषु कुत्रचित् ॥ ५२ ॥

व्यवच्छिनत्त्यन्ययोगमेवकारो विशेष्यगः ॥
क्रियया युक्त आधत्तेऽत्यन्तायोगव्यवच्छिदाम् ॥ ५३ ॥
व्यवच्छेदमयोगस्य विशेषणयुतश्चरेत्तु ॥
व्यवच्छिनत्त्यन्ययोगं सर्वत्रेति शिरोमणिः ॥ ५४ ॥
शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ॥
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः५
लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ॥
अन्वयानुपपत्तेः सा प्राचीनानाम्मते स्थिता ॥ ५६ ॥
गङ्गायां घोष इत्यादौ सम्बन्धस्तटगङ्गयोः ॥
लक्षणा स्यात्तटं लक्ष्यं सा त्रिधा लक्ष्यभेदतः ॥ ५७ ॥
स्वार्थत्यागात्तु जहती पूर्वोदाहरणे यथा ॥
स्वार्थाऽत्यागादजहती छत्रिणो यान्त्यमी इति ॥ ५८ ॥
शक्यैकदेशत्यागे तु कथ्यते भागलक्षणा ॥
सोऽयम्मनुष्य इत्यादौ नाङ्गीचक्रुः परे तु ताम् ॥ ५९ ॥
परंपराख्ये सम्बन्धे भवेल्लक्षितलक्षणा ॥
यथा द्विरेफादिपदे जहत्येवेयमुच्यते ॥ ६० ॥
निरूढा च स्वारसिकी लक्षणा स्यात्पुनर्द्विधा ॥
आद्या त्वनादितात्पर्य्यात्सा नीलादिपदे भवेत् ॥ ६१ ॥
अधुनातनतात्पर्यादन्त्या पूर्वमुदाहृता ॥
सिंहोयमितिवत्सादृश्यात्मा गौण्यपि लक्षणा ॥ ६२ ॥
वाक्ये तु शक्तेरभावात्तन्मूला लक्षणापि न ॥
समासस्यापि वाक्यत्वान्न शक्तिस्तार्किके मते ॥ ६३ ॥

राजाश्वादौ राजपदे तत्संबन्धिनि लक्षणा ॥
उपकुम्भार्द्धपिप्पल्यादिषूत्तरपदे तथा ॥ ६४ ॥
अत्रान्वयः पूर्वपदप्राधान्येन विधीयते ॥
चित्रग्वादौ गोपदादेर्गोमदादिषु लक्षणा ॥ ६५ ॥
पितरावित्यादिकस्य मातापित्रादिके भवेत् ॥
दधि संपश्यतीत्यादौ विभक्तिरहितस्थले ॥
दध्यादेर्दधिकर्मत्वादिकेऽर्थे लक्षणोह्यताम् ॥ ६६ ॥
विद्यादघट इत्यादावुत्तरस्य पदस्य तु ॥
लक्षणां घटभिन्नत्वेऽथान्यत्तात्पर्यबोधकम् ॥ ६७ ॥
धातोः प्रजयतीत्यादौ सा प्रकृष्टजये भवेत् ॥
तात्पर्यग्राहको ज्ञेय उपसर्ग इति स्थितिः ॥ ६८ ॥
न कर्मधारये द्वन्द्वे लक्षणापेक्ष्यते क्वचित् ॥ ६९ ॥
गङ्गातटस्थले गङ्गापदं शैत्यादिबुद्धये ॥
तद्बोधिका व्यञ्जनेति मतं साहित्यवेदिनाम् ॥ ७० ॥
यत्पदेन विना यस्य नानुभावकता भवेत् ॥
समभिव्याहृतिस्तस्य तत्राकांक्षेत्युदीर्यते ॥ ७१ ॥
यथा नामसुपोर्द्धातुतिङोर्धातुकृतोरपि ॥
समासे तु नीलपदोत्तरं घटपटादि च ॥ ७२ ॥
आसत्तिरव्यवहितोपस्थितिर्घटमानय ॥
तात्पर्यं वक्तुरिच्छा स्यात्तज्ज्ञानं क्वाप्यपेक्ष्यते ॥
प्रस्तावाद्यैरिदं वेद्यं यथा सैन्धवमानय ॥ ७३ ॥

योग्यता त्वन्वयाबाधो यथा नीरेण सिञ्चति ॥
वह्निना सिञ्चतीत्येतद्बाधाद्वाक्यं न युज्यते ॥ ७४ ॥
आद्ये सर्वमते हेतू क्वचित्तात्पर्यधीरपि ॥
योग्यता कथिताप्यन्यैर्न शाब्दे हेतुरिष्यते ॥ ७५ ॥
शाब्दे संसर्गमर्यादावशादेकपदार्थके ॥
संसर्गोन्यपदार्थस्यापदार्थोप्यत्रभासते ॥ ७६ ॥
निरन्तरप्राग्गतेन तथा तुल्यविभक्तिना ॥
बोधितस्य पदार्थस्याभेदः संसर्ग इष्यते ॥ ७७ ॥
नीलो घटो नीलघटमानयेत्यादिके यथा ॥
अभेदो भाति नीलस्य घट इत्यादिके तु न ॥ ७८ ॥
यदि भेद्यविभक्त्यन्या संख्या नैव विवक्षिता ॥
भेदकेपि तदा भेद्यसमानं वचनम्भवेत् ॥ ७९ ॥
प्रयुज्यतेऽन्यथा त्वत्र भेदोऽपि वचने तयोः ॥
देवदत्तः सुखी वेदाः प्रमाणं विषया मृतिः ॥ ८० ॥
क्रियाविशेषणन्धात्वर्थेष्वभेदान्वयं व्रजेत् ॥
स्तोकं पचत्यसौ स्तोकं पाक इत्यादि बुद्ध्यताम् ॥ ८१ ॥
अभेदार्था निरर्था वा विभक्तिः स्याद्विशेषणे ॥ ८२ ॥
नामार्थधात्वर्थयोस्तु भेदेनान्वयबोधनम् ॥
निपातप्रत्ययार्थाभ्यां समं स्यान्नेतरेण तु ॥ ८३ ॥
भूमौ न घट इत्यत्र निपातसहितस्थले ॥
अभावेन नञर्थेन भवेदेव घटान्वयः ॥ ८४ ॥

नाद्यात्कलंजमित्यत्राप्यनुयोगितयान्वयः ॥
विध्यर्थत्वाभावरूपनञर्थेनादनस्य यत् ॥ ८५ ॥
राजा पुरुष इत्यत्र योग्यतादौ च सत्यपि ॥
स्वत्वसम्बन्धेन राज्ञः पुरुषे नान्वयो भवेत् ॥ ८६ ॥
तण्डुलः पचतीत्यत्र क्रियानामार्थयोरपि ॥
कर्मत्वसंबन्धवशान्न पाके तण्डुलान्वयः ॥
शाब्दबोधस्वरूपन्तु जानीयादुपदेशतः ॥ ८७ ॥
अर्थापत्त्यादिकान्यन्ये प्रमाणानि प्रचक्षते ॥
तान्येतेष्वन्तर्भवन्ति पृथङ्नार्हन्ति वर्णनम् ॥ ८८ ॥
विपर्ययः संशयश्च तर्कश्चेत्यप्रमा त्रिधा ॥
मिथ्यामतिर्भ्रमाख्याद्या शुक्तौ रजतधीर्यथा ॥ ८९ ॥
सामान्यतो धर्मिबुद्धिर्विशेषादर्शनन्तथा ॥
एककोटिस्मृतिर्दोषा हेतवस्स्युर्विपर्यये ॥ ९० ॥
दोषा अनियताः पित्तदूरत्वसमतादयः ॥
स संशयो मतिर्या स्यादेकत्राभावभावयोः ॥ ९१ ॥
विशेषादर्शनङ्कोटिद्वयस्मृतिरिदन्द्वयम् ॥
हेतुः संशयमात्रे स्याद्यथा स्थाणुरयं न वा ॥ ९२ ॥
किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिश्च संशयः ॥ ९३ ॥
तर्कस्तु व्याप्यारोपेण व्यापकारोप इष्यते ॥
यद्यत्र न भवेद्वह्निस्तर्हि धूमोपि नो भवेत् ॥ ९४ ॥
प्रमाणानुग्राहकस्य सर्वत्राप्युपयोगिनः ॥
अस्य तर्कस्याप्रमात्वं बालोहं बोद्धुमक्षमः ॥ ९५ ॥

आत्माश्रयोऽन्योन्याश्रयश्चक्रिका चानवस्थया ॥
बाधितार्थप्रसंगश्च कैश्चिदूचे स पञ्चधा ॥ ९६ ॥
कैश्चित्तु व्याघात आत्माश्रयादीनाञ्चतुष्टयम् ॥
प्रतिबन्दीकल्पनायां लाघवं गौरवं तथा ॥ ९७ ॥
उत्सर्गोऽथापवादश्च वैयात्यञ्च खलम्प्रति ॥
इत्येकादशधा तर्कः कथितः सूक्ष्मदर्शिभिः ॥ ९८ ॥
आपाद्यस्यापादकस्योभयोश्चैता असिद्धयः ॥
मिथस्तर्कविरोधश्च तथा शिथिलमूलता ॥ ९९ ॥
विपर्ययापर्यवसानेष्टापत्ती च कीर्तिते ॥
तर्केषु दोषाः सप्तैते तान्बुधो नावकाशयेत् ॥ १०० ॥
सुनिश्चित्ते पुरीतत्स्थे बहिस्स्थे जागरो भवेत् ॥
सन्धिस्थे स्वप्नोऽत्र मतिस्स्यान्मानसविपर्ययः १०१ ॥
जाग्रच्चिन्तादृष्टवातादिदोषैः स्वप्नसम्भवः ॥
शुक्तिरूप्यादिभ्रमेषु मानार्थाः ख्यातयो मताः ॥ १०२ ॥
तत्रान्याख्यातिमाहुः काणादा गौतमा अपि ॥
आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ॥ १०३ ॥
तथा निर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥
विज्ञानशून्यमीमांसान्यायवेदान्तसम्मतम् ॥ १०४ ॥
बुद्धिरात्मा सा च सर्वपदार्थाकारधारिणी ॥
सारूप्याद्यात्मेति चात्मख्यातिर्विज्ञानवादिनाम् ॥ १०५ ॥
शुक्त्यादिदेशे रूप्यादेरसतो भासनं यतः ॥
अतोऽसत्ख्यातिमाख्यान्ति शून्यवादपरायणाः ॥ १०६ ॥

अलीक एवात्र भाति सम्बन्धः शुक्तिरूप्ययोः ॥
इत्यसत्ख्यातिमाख्यान्ति केचिदन्यमतानुगाः ॥ १०७ ॥
मीमांसका भ्रमं नाङ्गीकुर्वन्त्यख्यातिवादिनः ॥
उपस्थितेष्टभेदस्याग्रहादेव प्रवर्तनम् ॥ १०८ ॥
तत्रानिर्वचनीयस्य रजतादेः समुद्भवः ॥
ततो निर्वचनीयाख्यां ख्यातिं॥वेदान्तिनो जगुः ॥ १०९॥
तत्र रूप्यादिकांशानां शुक्त्यादावपि सत्त्वतः ॥
रामानुजीयाः सत्ख्यातिं प्रवदन्ति विलक्षणाम् ॥ ११० ॥
स्मृतिर्द्विधा यथार्था चायथार्था चेति कीर्तिता ॥
आद्या तु स्यात्प्रमाजन्या द्वितीया त्वप्रमोद्भवा ॥ १११॥
ज्ञाननिष्ठम्प्रमात्वञ्च दोषाभावविशिष्टया ॥
यावन्निजाश्रयग्राहिसामग्र्या गृह्यते न वा ॥
एवमेव प्रमात्वन्तद्दोषाभावविशिष्टया ॥ ११२ ॥
ज्ञानसामान्यजनकसामग्र्या जन्यते न वा ॥ ११३ ॥
एतौ द्वौ संशयौ ज्ञप्तावुत्पत्तौ च मतौ क्रमात् ॥
आद्यौ कोटी स्वतस्त्वस्य परतस्त्वस्य चान्तिमौ ॥ ११४॥
मीमांसावेदान्तविद्भिः स्वतस्त्वमुररीकृतम् ॥
परतस्त्वं न्यायविद्भिः संशयोत्पत्तितो मतम् ॥ ११५ ॥
तस्मात्संवादिप्रवृत्तिलिंगकादनुमानतः ॥
प्रमात्वग्रहणं ज्ञेयम्परतस्त्वमतः स्फुटम् ॥
तस्योत्पत्तावपि गुणो मुख्यो हेतुर्मतोऽधिकः ॥ ११६ ॥

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ॥
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥११७॥
पक्षे साध्यविशिष्टेन परामर्शो गुणो भवेत् ॥
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ ११८ ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ॥११९॥
अप्रमात्वमपि ग्राह्यमन्यश्च परतो मतम् ॥
तत्रोत्पत्तौ मुख्यहेतुर्दोषो बहुविधश्च सः ॥ १२० ॥

इति शाब्दप्रकरणम् ।

---

अथोच्यन्ते गौतमोक्ताः पदार्थाः षोडश क्रमात् ॥
अन्तर्भावस्तु द्रव्यादिकेषु ज्ञेयो यथायथम् ॥ १ ॥
ते च प्रमाणप्रमेयसंशयाश्च प्रयोजनम् ॥
दृष्टान्तोऽप्यथ सिद्धान्तोऽवयवास्तर्कनिर्णयौ ॥ २ ॥
वादो जल्पो वितंडा च हेत्वाभासाश्छलन्तथा ॥
जातयो निग्रहस्थानान्येषाञ्ज्ञानं विमुक्तये ॥ ३ ॥
प्रत्यक्षादि प्रमाणं स्यात्प्रमेया द्वादश स्मृताः ॥
आत्मदेहेन्द्रियार्थाश्च बुद्धिचेतःप्रवृत्तयः ॥ ४ ॥
दोषश्च प्रेत्यभावश्च फलदुःखविमुक्तयः ॥
स्पर्शान्तशब्दा अर्थाः स्युरारम्भास्तनुवाग्धियाम् ॥ ५ ॥
प्रवृत्तिः प्रेत्यभावस्तु भूयोभूयो जनिर्मृतिः ॥
दोषा रागद्वेषमोहा रागः सप्तविधः स्मृतः ॥ ६ ॥

कामस्तृष्णा स्पृहा लोभो माया दम्भश्च मत्सरः ॥
द्वेषाः षड् द्रोहाभिमानेर्ष्याऽसूयामर्षरुड्भिदा ॥ ७ ॥
मोहाः सप्त प्रमादः शुग्भीमाना अप्रमा त्रयम् ॥
मुख्यम्फलं सुखन्दुःखङ्गौणमन्यदनेकधा ॥ ८ ॥
प्रामाणिकतयाऽर्थः स्वीकृतः सिद्धान्त उच्यते ॥
सर्वतंत्रस्य सिद्धान्तो दृगादेरिन्द्रियत्ववत् ॥ ९ ॥
स प्रतितंत्रसिद्धान्त एकेनांगीकृतस्तु यः ॥
मीमांसकैरेव शब्दनित्यत्वं स्वीकृतं यथा ॥ १० ॥
परसिद्धिरन्यसिद्धौ कथितः शास्त्रेऽधिकरणसिद्धान्तः ॥
कार्येऽखिलज्ञजत्वे सिद्धे त्वीशाखिलज्ञतासिद्धिः ॥ ११ ॥
स्वसूत्रेऽनुदितस्यांगीकारोऽभ्युपगमाह्वयः ॥
सिद्धान्तः स्याद्यथाचित्तस्येन्द्रियत्वमुदीरितम् ॥ १२ ॥
कथातत्त्वबुभुत्सूनां वादो जल्पो जिगीषया ॥
वितण्डा सैव स्वपक्षस्थापनारहिता तु या ॥ १३ ॥
छलं वक्तुरतात्पर्यविषये दूषणार्पणम् ॥
यथा पीता सुरेत्यत्र न पीता किन्तु सा सिता ॥ १४ ॥
चतुर्विंशतिधा जातिः स्वव्याघातकमुत्तरम् ॥
साधर्म्यवैधर्म्योत्कर्षापकर्षावर्ण्यवर्ण्यकैः ॥ १५ ॥
विकल्पसाध्यप्राप्त्यप्राप्तिप्रसंजनसंशयैः ॥
प्रतिदृष्टान्तानुत्पत्तिहेतुप्रकरणैः समा ॥ १६ ॥
अर्थापत्त्यविशेषोपपत्तिभिश्चोपलब्धितः ॥
नित्यानित्यानुपलब्धिकार्यैश्चापि समाः क्रमात् ॥ १७ ॥

वादिपराजयहेतुर्निरूपितं निग्रहस्थानम् ॥
हान्यन्यताविरोधाः सन्न्यासश्च प्रतिज्ञायाः ॥ १८ ॥
हेत्वन्तरमर्थान्तरनिरर्थकापार्थकान्यधिकम् ॥
न्यूनमविज्ञातार्थाननुभाषणपौनरुक्त्यानि ॥ १९ ॥
अप्राप्तकालमज्ञानाप्रतिभाथो मतानुज्ञा ॥
विक्षेपनिरनुयोज्यानुयोजने चापसिद्धान्तः ॥ २० ॥
पर्यनुयोज्योपेक्षणहेत्वाभासा इतीमानि ॥
अथ च शिरोमणिरीत्या न्यूनाधिकता पदार्थानाम्॥२१॥
ईशे कालाकाशदिशोन्योन्याभावे पृथक्त्वकम् ॥
चैतश्च त्र्यणुके भूतेऽन्तर्भवन्तीति निश्चयः ॥ २२ ॥
त्र्यणुकेष्वेव विश्रामः पराणुद्व्यणुकौ तु न ॥
ईशे परिमितिर्नास्ति विशेषो नेष्यतेऽधिकः ॥ २३ ॥
नानुद्भूतश्च रूपादि चित्रं रूपञ्च नाधिकम् ॥
परापरत्वे कालोत्थे मते ज्येष्ठकनिष्ठते ॥ २४ ॥
दैशिके ते विप्रकर्षसन्निकर्षौ परम्मतौ ॥
अव्याप्यवृत्तित्वमपि रूपादिषु च कर्मसु ॥ २५ ॥
न सर्वभावकार्येषु नियमोऽसमवायिनः ॥
अतो नासमवायि स्यादेकत्वस्य च कारणम् ॥ २६ ॥
हेतुर्द्रव्यविनाशस्य विनाशोऽसमवायिनः ॥
द्रव्यादिवृत्तौ सत्तायाम्मानं किंचन नेक्ष्यते ॥ २७ ॥
गुणत्वानुभवत्वे च न जाती केचनोचिते ॥
न घटात्मा घटाभावाभावः किन्त्वतिरिच्यते ॥ २८ ॥

तृतीयः प्रथमाभावश्चतुर्थस्तु द्वितीयकः ॥
न ध्वंसस्य प्रागभावः प्रतियोग्यात्मतां व्रजेत् ॥ २९ ॥
शक्तिः संख्याकारणत्वं सत्त्वं कार्यत्वमित्यपि ॥
पदार्थान्तरतां यान्ति समवायोप्यनेकधा ॥ ३० ॥
सप्रसंग उपोद्घातो हेतुतावसरस्तथा ॥
निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते ॥ ३१ ॥
अनया कारिकावल्या प्राक् पदार्थान्समासतः ॥
चित्ते कृत्वा ततो गद्यगुम्फः सम्यगधीयताम् ॥ ३२ ॥
लक्ष्माद्यभावाद्योर्थोत्र सम्यग्बोद्धुन्न शक्यते ॥
स. गद्यगुम्फे स्फुटतां यास्यतीति प्रतीक्ष्यताम् ॥ ३३ ॥

इति न्यायप्रदीपकारिकाः ।

---

श्रीविश्व[1]नाथ जगदीश गदाधर श्रीनारायणात्र भवतः सुकरां सुवर्णाम् ॥
गाङ्गामपि प्रविलसन्मतिशक्तिदोहाम्मूद्र्ध्ना नतेन शिशुसूनुहिताय भिक्षे ॥ १ ॥
भर्त्स्यमानः खलजनैर्हस्यमानो बुधैरपि ॥
उपेक्ष्यमाणः सुजनैः स्तूयमानश्च बालिशैः ॥ २ ॥
संक्षिप्य तार्किकमतं कारिकाभिर्यथामति ॥
लिखामि सुतरागान्धो गद्यैरनतिविस्तरात् ॥ ३ ॥

---

१—विश्वनाथादयस्तार्किकाः श्रीविष्णुश्चात्र प्रार्थ्यन्ते ।

तर्कशास्त्रं कणादाक्षपादप्रणीतत्वाद्द्विविधम्।तत्राद्यं वैशेषिकमौलूक्यं चेति व्यवह्रियतेऽन्त्यन्तु न्यायशास्त्रमिति।उभयस्यापि पदार्थनिर्वचनोपयोगे उद्देशो लक्षणं परीक्षा चेति त्रिधा प्रवृत्तिः। तत्र नाममात्रेण वस्तुसंकीर्त्तनम् उद्देशः।यथा—द्रव्यगुणेत्यादि।असाधारणधर्मो लक्षणम् । यथा—गन्धवत्त्वं पृथिव्याः। असाधारणत्वं च लक्ष्यतावच्छेदकसमनियतत्वम् । समनियतत्वं च तद्व्याप्यत्वे सति तद्व्यापकत्वम् । यस्य यत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वन्तस्य तम्प्रति व्यापकत्वम् । यस्य यदत्यन्ताभावाधिकरणावृत्तित्वं तस्य तम्प्रति व्याप्यत्वम् । अवच्छेदकत्वं स्वरूपसंबन्धविशेषः । अन्यूनानतिरिक्तवृत्तिर्धर्मो वा । लक्षितस्यैतल्लक्षणं सम्भवति न वेति विचारः परीक्षा । अत्र उद्देशस्य पक्षज्ञानं फलम्।लक्षणस्य व्यावृत्तिर्व्यवहारो वा । यथा—पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात् । यन्नैवं तन्नैवं यथा जलम् । एवं व्यवहारोपि,परीक्षाया लक्षणे दोषपरिहारः फलम् । लक्षणदोषाश्चाव्याप्त्यादयः । लक्ष्यैकदेशवृत्तित्वे सति लक्ष्यैकदेशावृत्तित्वम् अव्याप्तिः यथा—गोः कपिलत्वे॥ लक्ष्यवृत्तित्वे सत्यलक्ष्यवृतित्वम् अतिव्याप्तिः।यथा—गोः शृङ्गत्वे ॥ लक्ष्यमात्रावृत्तित्वम् असम्भवः।यथा—गोरेकशफत्वे ॥ अभिधेयप्रयोजनाधिकारिसंबंधाख्या अनुबन्धास्तज्ज्ञानं चाध्ययनादिप्रवृत्तिहेतुः । शास्त्रजप्रमानिर्वर्त्याज्ञानगोचरः अभिधेयः । यथाऽत्र पदार्थाः ॥यमर्थमधिकृत्य पुरुषः प्रवर्त्तते तत्प्रयोजनम् । तच्च मुख्यं गौणं चेति द्विधा।इतरेच्छाऽनधीनेच्छाविषयः मुख्यम् । यथाऽत्रमोक्षः।मुख्यप्रयोजनेच्छाधीनेच्छाविषयःगौणम्।यथा-पदार्थ-

ज्ञानम्॥ द्विविधप्रयोजनप्राप्तिकामः अधिकारी॥सम्बन्धश्चानेकधा। तत्र शास्त्रपदार्थयोः प्रतिपाद्यप्रतिपादकभावः । शास्त्रपदार्थज्ञानयोः जन्यजनकभावः । पदार्थतज्ज्ञानयोर्विषयविषयिभावः । शास्त्रमोक्षयोः पदार्थज्ञानमोक्षयोश्च प्रयोज्यप्रयोजकभाव इत्यादि । ग्रन्थारम्भे शिष्टा मंगलमाचरन्ति शिष्यशिक्षार्थं निबध्नन्ति च तत्फलञ्च प्राचां मते विघ्नध्वंसपूर्विका समाप्तिः । केषाञ्चित्समाप्तिजनकोऽदृष्टविशेषः। नव्यानान्तु विघ्नध्वंस एव मंगलफलं समाप्तिस्तु प्रतिभादिभिः । विघ्नसंसर्गाभावः समाप्तौ हेतुः।अन्वयव्यतिरेकसहचारज्ञानं कारणतानिश्चायकं तद्व्यभिचारज्ञानं च कारणतानिश्चयप्रतिबन्धकम् । इति सर्वसम्मतो नियमः ॥ तत्र कारणसत्त्वे कार्यसत्त्वम् अन्वयसहचारः । यथा—दंडादिसत्त्वे घटसत्त्वम् । कारणाभावे कार्याभावः व्यतिरेकसहचारः । यथा—दण्डाद्यभावे घटाभावः । कारणसत्त्वे कार्याभावः अन्वयव्यभिचारः । यथा—मङ्गलसत्त्वेपि कादंबर्यादौ समाप्त्यभावः । कारणाभावे कार्यसत्त्वं व्यतिरेकव्यभिचारः । यथा—नास्तिकग्रंथे मंगलाभावेपि समाप्तिसत्त्वम्।इति बहूनां लेखः ॥ यदि तु एकस्य कारणतानिश्चयायकारणकलापस्यान्वयव्यतिरेकसहचारव्यभिचारग्रहावकिञ्चित्करौ-प्रत्युत कारणत्वे सन्देहकरावित्युद्भाव्यते तदान्वयव्यतिरेकव्याप्तिग्रहवदेवमस्तु।कार्यसत्त्वे कारणसत्त्वम् अन्वयसहचारः । कारणासत्त्वे कार्यासत्त्वं व्यतिरेकसहचारः । यथा—दंडघटयोः। कार्यसत्त्वे कारणासत्त्वमन्वयव्यभिचारः।कारणसत्त्वे कार्यसत्त्वं व्यतिरेकव्य-

भिचारः । यथा—रासभघटयोः । उभयथाप्यन्वयव्यतिरेकव्यभिचाराज्ञ मंगलं समाप्तिं विघ्नध्वंसं प्रति वा कारणम् इत्याहुः । तत्र वदन्ति--मंगलं सफलम् अविगीतशिष्टाचारविषयत्वात्, दर्शादिवत् । इत्यनुमानेन मंगलस्य सफलत्वन्तावत्त सिद्धम् । तत्र फलसाधनतांशे भ्रांतिरहितत्वं शिष्टत्वं वेदप्रामाण्याभ्युपगंतृत्वं वा । बलवदनिष्टाननुबन्धित्वम् अविगीतत्वम् । तत्र च विशेषतः फलजिज्ञासायाम् मंगलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वात्।यन्नैवं तन्नैवं यथा घटादिः । इत्यनुमानात्संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वादुपस्थितेश्च समाप्तिरेव फलं कल्प्यते। ततश्च मंगलं वेदबोधितकर्त्तव्यताकम् अलौकिकधर्मशास्त्रानिषिद्धशिष्टाचारविषयत्वात्, दर्शादिवत् । इत्यनुमानेन "ग्रंथसमाप्तिकामो मंगलमाचरेत्" इति श्रुतिरपि मंगले मानं कल्प्यते विधिमन्तरा रागादिप्राप्तभिन्नः अलौकिकः । एवं च नास्तिकग्रंथेपि । अयं नास्तिकः कृतमंगलकः विघ्नध्वंसपूर्वकपरिसमाप्तिमत्त्वात्, चैत्रपुरुषवत् । इत्यनुमानेन बोधितं जन्मान्तरीयं मंगलं स्वतः सिद्धविघ्नात्यन्ताभावो वा कल्प्यते । कादंबर्यादौ बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम् । समानाधिकरणयोरेव कार्यकारणभाव इति तार्किकोद्घोषानुसारेण स्वजनकविघ्नध्वंसोत्पत्त्यवच्छेदकतासंबन्धेन समाप्तिं प्रत्यवच्छेदकतासंबंधेन मंगलस्य कारणत्वं कल्प्यम् ॥

मंगलं त्रिविधम्—आशीर्वादनमस्कारवस्तुनिर्देशभेदात् । परमेश्वरात्स्वस्य स्वशिष्यस्य वा वांछितार्थप्रार्थनम् आशीर्वादः ।

स्वापकर्षबोधानुकूलः स्वीयव्यापारविशेषः नमस्कारः । नमस्कारादिमंतरेण परमेश्वरस्य संकीर्त्तनम् वस्तुनिर्देशः ॥ मंगललक्षणञ्च विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाभावाभिन्नत्वे च सति प्रारिप्सितविघ्नध्वंसासाधारणकारणत्वम् ॥

इति मङ्गलवादः ।

---

"तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्यात्मज्ञानस्यैव साक्षान्मोक्षसाधनतोच्यते अन्यत्रोक्तानां काशीमरणादीनान्तु परंपरया।तत्र"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतिः श्रवणादीनामात्मतत्त्वज्ञानसाधनतां वक्ति । तत्र श्रोत्रियब्रह्मनिष्ठगुरुमुखात् श्रुतिवाक्यार्थविज्ञानम् श्रवणम् । साधकबाधकप्रमाणोपन्यासरूपयुक्तिभिस्तदर्थानुचिन्तनम्, मननम् । श्रुतार्थस्य नैरंतर्येण दीर्घकालमनुसंधानम् निदिध्यासनम् ॥ तत्र क्रमः—प्रथमं निष्कामकर्मभिरात्मशुद्धिः । तया विषयेषु वैराग्यम् । ततः श्रवणादौ प्रवृत्तिः।तत्र मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम्।ततो निदिध्यासनम्।तेन देहादिविलक्षणात्मसाक्षात्कारे देहादावात्माभिमानरूपमिथ्याज्ञाननिवृत्तिः।ततो रागद्वेषरूपदोषनिवृत्तिः। ततो धर्माधर्मरूपप्रवृत्तिनिवृत्तिः । ततः प्रारब्धकर्मफलभूतशरीरसंबंध रूपजन्माभावः । तत एकविंशतिदुःखध्वंसरूपात्यन्तिकदुःखनिवृतिरूपो मोक्षो जायते।तथा च सूत्रम्—"दुःखजन्मप्रवृत्तिमिथ्याज्ञानानामुत्तरोत्तरापाये तदनंतरापायादपवर्गः" पूर्वसञ्चितानां कर्मणां तत्त्वज्ञा-

नान्नाशः प्रारब्धस्य तु भोगादेव नाशः तद्विषयकमेव"नाभुक्तं क्षीयते कर्म"इति वाक्यम्।अत्र दुःखानि च शरीरं षड्विषयाः षडिन्द्रियाणि षड् बुद्धयः सुखं दुःखं चेत्येकविंशतिः।दुःखत्वजातिशून्ये शरीरादौ दुःखसंबन्धितया गौणं दुःखत्वम् । श्रोत्रमनसोर्नित्यत्वेपि कर्णशष्कुलीविशिष्टस्यैव श्रवणस्य आत्मसंयोगरूपव्यापारविशिष्टस्यैवं मनसश्च ज्ञानद्वारा दुःखरूपतया तद्विशिष्टयोस्तयोर्नाशसंभवः। विषयशब्देन तत्र रागो विवक्षितः शब्दादिविषयाणां नाशस्य तत्त्वज्ञानकार्यत्वासंभवात् ॥ तथा च मुक्तिलक्षणम्—स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः मुक्तिः ॥ नव्यास्तु—आत्यन्तिको दुरितध्वंसो मुक्तिरित्यङ्गीकृत्य लक्षणे दुःखस्थाने दुरितशब्दं पठन्ति । स्वर्गादिरेव मुक्तिरिति मीमांसकाः॥ ज्ञानकर्मसमुच्चयान्नित्यसुखाभिव्यक्तिरिति भट्टपादाः॥दुःखात्यन्ताभाव इति केचित्तदनुयायिनः ॥ आत्मज्ञानपूर्वकवैदिककर्मानुष्ठानाद्धर्माधर्मयोः क्षये देहेन्द्रियाद्यत्यन्तोच्छेद इति प्राभाकराः ॥ प्रकृतिपुरुषविवेकेनाविवेकनिवृत्तौ त्रिविधदुःखनिरोधे औदासीन्यमिति सांख्याः॥ अविद्यास्मितारागद्वेषाभिनिवेशरूपक्लेशपञ्चकस्य जात्याद्युभोगरूपबन्धस्य च निवृत्तौ स्वातन्त्र्यप्राप्तिरिति पातञ्जलाः ॥ पशुपतिपूजनादिभिर्जीवरूपपशोर्बन्धनरूपपाशनिवृत्तौ नित्यं पशुपतिसमीपस्थितिरिति पाशुपताः ॥ पञ्चरात्रादिशास्त्ररीत्या वैष्णवधर्मानुष्ठानलब्धविष्णुप्रसादस्य विष्णुलोकस्थितिरिति वैष्णवाः ॥ पञ्चाग्निविद्याद्युपासनयार्चिरादिमार्गेण

ब्रह्मलोकप्राप्तिरिति हैरण्यगर्भाः ॥ अहं ब्रह्मास्मीति जीवब्रह्मा-भेद श्साक्षात्कारेणाविद्यानिवृत्तौ सर्वोपाधिरहितस्यात्मनः स्वरूपेण स्थितिरित्येकदंडिवेदान्तिनः ॥ जीवस्य ब्रह्मणा सह भेदाभेदौ श्रुत्योच्येते तत्र ज्ञानकर्मसमुच्चयाभ्यासेन कर्मवासनासहितभेदांशनि-वृत्तौ कारणब्रह्मणि लय इति त्रिदण्डिवेदान्तिनः॥समुद्रस्य निस्तरं-गत्वसतरंगत्वे इव ब्रह्मणो निर्विकारत्वसविकारत्वे अवस्थे श्रुतिसिद्धे एव । तत्र ज्ञानकर्मसमुच्चयाभ्यासात्सविकारावस्थापारित्यागाज्जीवस्य निर्विकारावस्थाप्राप्तिरिति केचित् ॥ श्रीभगवद्वासुदेवैकनिष्ठ-जगत्कर्तृत्वादिधर्मान्न विना सर्वज्ञत्वादिकल्याणगुणावाप्तिपूर्वकम्भग-वत्स्वरूपानुभव इति रामानुजीयाः ॥ जगत्कर्तृत्वं लक्ष्मीं श्रीव-त्सञ्च विहाय निरतिशयानन्दादिभगवद्धर्मसदृशधर्मप्राप्तिः सालोक्य-सामीप्यसारूप्यसायुज्यान्यतमरूपा मुक्तिरिति माध्वाः ॥ गोलोके श्रीकृष्णेन सह रासलीलाद्यनुभव इति वाल्लभाः ॥ परा पश्यन्ती मध्यमा वैखरीति चतुर्विधवाचि ब्रह्मरूपपरादर्शनमिति शाब्दिकाः॥ पारदसेवनेन जरादिराहित्यमिति रसेश्वरवादिनः ॥ सर्वजगच्छू-न्यरूपं भ्रान्त्यैव सदिति प्रतीयते तस्य शून्यताभावनया शून्यात्म-तातत्त्वज्ञानमिति शून्यवादिनः ॥ स्वातन्त्र्येण स्थितिर्मरणं वा मुक्तिरिति चार्वाकाः ॥ अयं घट इत्यादिविषयाकारं प्रवृत्तिविज्ञा-नम्, तत्कारणीभूतमहमिति निर्विषयमालयविज्ञानम्, प्रवृत्तिविज्ञान-लयेनालयविज्ञानधारा मुक्तिरिति विज्ञानवादिनः ॥ आर्हतशा-स्त्रोक्ततपसा आत्मैकाकारसमाधिना चाष्टविधबंधध्वंसे सततमूर्द्ध्वगम-

नमलौकिकाकाशगमनं वेत्याहंताः॥इत्युक्तनानामताभिमतमुक्तिखण्डनप्रकारो ग्रन्थान्तराज्ज्ञेयः ॥ देहेन्द्रियाद्यनात्मपदार्थभेदवत्तयात्मज्ञानन्तत्त्वज्ञानम्, ततो मुक्तिः ॥

भेदश्चान्योन्याभावस्तज्ज्ञानं च प्रतियोगिज्ञानाधीनम् । प्रतियोगिरूपदेहेन्द्रियादिज्ञानं द्रव्यादिज्ञानाधीनम् । अतो द्रव्यादिपदार्थनिरूपणमावश्यकम् । तत्र ज्ञेयत्वं प्रमेयत्वमभिधेयत्वमस्तित्वं वा पदार्थसामान्यलक्षणम्, पदार्थाश्च भावाख्याः। द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् कणादसूत्रप्रोक्ताः।अभावश्च सप्तमः । तत्र द्रव्यत्वादयः सप्तपदार्थविभाजका धर्माः । आद्यास्त्रयो जातयः शेषा उपाधयः । तत्र द्रव्याणि-पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव ॥रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः । क्वचिद्धर्माधर्म्मावदृष्टशब्देनादाय त्रयोविंशतिरुक्ताः ॥ उत्क्षेपणापक्षेपणाकुंचनप्रसारणगमनानि पंच कर्माणि ॥ परमपरं चेति द्विविधं सामान्यम् ॥ नित्यद्रव्यवृत्तयो विशेषास्त्वनंता एव ॥ समवायस्त्वेक एव ॥ अभावो द्विधा-संसर्गान्योन्याभावभेदात् । संसर्गाभावस्त्रिधा।प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावश्चेति । चतुर्थं सामयिकाभावमपि केचिदाहुः॥इति न्यायप्रदीपे उद्देशान्तः प्रथमः परिच्छेदः ॥ १ ॥

तत्र समवायि कारणं द्रव्यम् । गुणाश्रयो वा द्रव्यत्वजातिमद्वा । जातिमतां जातिरूपं लक्षणं सिद्धमेवेति लक्षणान्तरलाभेन

लेख्यम् ॥ समवायिकारणादिलक्षणानि वक्ष्यन्ते । ननु आद्यक्षणे स्ववर्तिकार्यगुणकारणस्य द्रव्यस्य पूर्वक्षणवर्त्तित्वार्थं निर्गुणत्वाङ्गीकाराद्गुणाश्रयत्वं लक्षणमव्याप्तम् इति चेत्—गुणसमानाधिकरणसत्ताभिन्नजातिमत्त्वन्तदर्थः । गुणद्रव्ययोर्द्धर्मधर्मिभाव एव अभेद एव वा न कार्यकारणभाव इति तु न नैयायिकमतम् ॥ नन्वेवमपि एकं रूपं रसात्पृथगिति प्रतीतेः रूपे गुणे एकत्वपृथक्त्वयोर्गुणयोः सत्त्वादतिव्याप्तिरिति चेत्—इह एकस्मिन् रूपाश्रये द्रव्ये एव एकत्वपृथक्त्वयोः स्थितावपि रूपे प्रतीतिः सामानाधिकरण्यात् भ्रान्तिरेवेत्याहुः । द्रव्यत्वजातौ मानन्तु विलक्षणेषु घटादिषु इदं द्रव्यमिति प्रत्यक्षमेव । यत्र समवायेन कार्यं तत्र तादात्म्येन द्रव्यमिति कार्यकारणभावः । समवायसंबन्धावच्छिन्नाकार्यत्वावच्छिन्नकार्यतानिरूपिता द्रव्यवृत्तिर्या कार्यसमवायिकारणता संयोगस्य विभागस्य वा समवायिकारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वात् । तन्तुवृत्तिकारणतावत् इत्यनुमानं वा । स च धर्मो द्रव्यत्वमेव कारणतायाः कार्यतायाः प्रतिबन्धकतायाः प्रतिबन्ध्यतायाः पदशक्यतायाश्चावच्छेदकत्वेन यो धर्मः सिद्ध्यति सोऽसति बाधके जातिरेवेति नैयायिकसिद्धान्तात्तस्य जातित्वम्॥ आकाशत्वादीनि त्रीणि उपाधयः। पृथिवीत्वादीनि शेषाणि जातयः॥ गन्धवती पृथिवी। गन्धवत्त्वञ्च गन्धसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम् । तेन सुरभ्यसुरभिकपालारब्धत्वेन परस्परगन्धप्रतिबन्धान्निर्गन्धे उत्पन्नविनष्टे आद्यक्षणावच्छिन्ने

च घटे नाव्याप्तिः। विलक्षणेषु इयं पृथिवीति प्रत्यक्षमेव पृथिवीत्वजातौ मानम्। गन्धसमवायिकारणतावच्छेदकतानुमानं वा। जले तु पृथिवीगन्धस्यैव स्वाश्रयसंयोगसंबंधेन भानम्। एवं वायावपि तदानींतनकस्तूर्याद्यंशसंबधात्। कस्तूर्यादिन्यूनता त्वत्यल्पत्वान्न भासते,भोक्तृदृष्टवशेन तत्राधिकोत्पत्तिमपि कल्पयन्ति, पाषाणादावप्यनुत्कटो गंधोस्त्येव। पाषाणादयः गन्धवन्तः पृथिवीत्वात्। प्रसिद्धपृथिवीवदित्यनुमानादपि तत्सिद्धेः। अत एव तद्भस्मनि गन्धोपलम्भः।यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति न्यायेन भस्मनः पाषाणोपादानोपादेयतासिद्धेः।दृष्टं चैतत्खंडपटे महापटध्वंसजन्ये।पृथ्वीजलतेजोवायवः प्रत्येकं द्विधा नित्या अनित्याश्च।परमाणुरूपा नित्याःद्व्यणुकादयःसर्वे कार्यरूपा अनित्याः,प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगि नित्यम्। प्रागभावप्रतियोगित्वध्वंसप्रतियोगित्वान्यतरवदनित्यम्।पुनःपृथिव्यादयश्चत्वारस्त्रिधा,शरीरेन्द्रियविषयभेदात्।अन्त्यावयवित्वे सति चेष्टाश्रयः शरीरम्॥हिताहितप्राप्तिपरिहारार्था क्रिया चेष्टा। अवयवजन्यत्वे सति अवयव्यजनकद्रव्यम् अन्त्यावयवि॥द्रव्यसमवायिकारणमवयवः॥ जन्यद्रव्यमवयवी॥ शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रय इन्द्रियम्। आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियं विषयेण ततः प्रत्यक्षमिति क्रमः॥ शरीरेन्द्रियभिन्नत्वे सति भोगोपयोगी विषयः॥ सुखदुःखान्यतरसाक्षात्कारो भोगः॥ यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव।न हि

बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । शरीरेन्द्रिययोर्विषयत्वेपि पृथगुक्तिः शिष्यबुद्धिवैशद्यार्था इति सामान्यलक्षणानि॥ विशेषतस्तु— पृथिव्यादिलक्षणेषु शरीरेन्द्रियविषयशब्दनिवेशे तत्तच्छरीरादिलक्षणानि सम्पद्यन्ते, पृथिव्यादिलक्षणनिर्वचनवत्तन्निर्वचनं ज्ञेयम्।यथा—गन्धवच्छरीरं पार्थिवं शरीरम् । एवमेव पार्थिवेन्द्रियविषययोः । अत्रापि सर्वत्र गंधसमानाधिकरणेत्यादिपूर्ववन्निर्वचनम् । अत्र पार्थिवशरीरं मनुष्यादेः, इन्द्रियं घ्राणम् गंधगन्धत्वगंधाभावानां ग्राहकम् । येनेन्द्रियेण यो गुणो गृह्यते तेनैव तन्निष्ठा जातिस्तदभावश्च गृह्यत इति नियमात् ॥ विषयः पाषाणादिः ॥ शरीरं द्विधा--योनिजमयोनिजं च । शुक्रशोणितयोः परस्परमेलनजन्यं योनिजम् । योनिजभिन्नमयोनिजम् । योनिजं द्विधाजरायुजमंडजं च।जरायुजं मनुष्यादेः।अंडजं पक्ष्यादेः। अयोनिजं द्विधा—स्वेदजमुद्भिज्जञ्च।स्वेदजं लिक्षादेः उद्भिज्जं वृक्षादेः।शास्त्रैकप्रमाणकमदृष्टविशेषजन्यं तृतीयमप्याहुः । तच्च स्वर्गिनारकिमन्वादीनाम् । वृक्षः शरीरम् आध्यात्मिकवायुसंबंधवत्त्वात् । मनुष्यादिशरीरवत् इत्यनुमानं वृक्षादेः शरीरत्वे मानम् । आध्यात्मिकवायुसंबंधे च वृक्षः आध्यात्मिकवायुसंबंधवान् वृद्धिमत्त्वात्, भग्नक्षतावयवसंरोहणवत्त्वाद्वा, मनुष्यादिशरीरवदित्यनुमानम्मानम् ॥ मनुष्यादिशरीरम्पार्थिवम्, गन्धवत्त्वात् नीलादिरूपवत्त्वाद्वा, प्रसिद्धपृथिवीवत्, इत्यनुमानम्मनुष्यादिशरीराणाम्पार्थिवत्वे मानम् ॥ पार्थिवशरीरे जलादिभागस्यापि सत्त्वात्पाञ्चभौतिकत्वं पृथिवीभागा-

धिकयात्पार्थिवत्वमुच्यते । यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यं गुणं गृह्णाति तत्तद्गुणयुक्तमिति नियमोद्भावितेन घ्राणेन्द्रियं गन्धवत् गन्धग्राहकेन्द्रियत्वात्, इत्यनुमानेन गन्धवत्त्वसिद्धौ घ्राणस्य पार्थिवत्वसिद्धिः । यद्वा—घ्राणेन्द्रियम्पार्थिवम्, द्रव्यत्वे सति रूपादिषु पञ्चसु गन्धस्यैवाभिव्यञ्जकत्वात्,कुंकुमगन्धाभिव्यञ्जकघृतवत्, वायूपनीतसुरभिपार्थिवभागवद्वा इत्यनुमानेन । इन्द्रियेषु मानन्तु—रूपाद्युपलब्धिः करणजन्याजन्यत्वात्, इत्यनुमानम् । परमाणौ मानन्तु—गवाक्षरन्ध्रेऽर्कप्रकाशे यत् सूक्ष्मं रजो दृश्यते स त्रसरेणुः त्र्यणुकश्चोच्यते।तत्र्यणुकमवयवजन्यम्, चाक्षुषद्रव्यत्वात्, घटवत् इति द्व्यणुके सिद्धे द्व्यणुकः अवयवजन्यः महदारम्भकत्वात् इति तदवयवः परमाणुः सिद्ध्यति । अनवस्थाभयान्नावयवधारांगीकारः, तदनित्यत्वे समवायिकारणं विना कार्योत्पत्तिप्रसंगः । यदि सूक्ष्मदर्शनयन्त्रेण तस्यापि सावयवता सम्भाव्यते तर्हि यस्ततोपि सूक्ष्मः स एव परमाणुरस्तु उक्तदूषणद्वयभिया तत्परित्याग एव तु कर्त्तुमशक्यः,महत्त्वतारतम्यस्य विभुष्विवाणुत्वतारतम्यस्यावश्यं क्वापि विश्रामो वाच्यः । स एव परमाणुः शीतस्पर्शवज्जलम् । चन्दनादावपि तदन्तर्वर्तिजलशैत्यस्यैव परम्परया भानम्।शीतस्पर्शवत्त्वं च शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्। नात उत्पन्नविनष्टजलादावव्याप्तिः॥ स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः ॥ यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकन्तथापि जन्यस्नेहत्वं तथा बोध्यम् । अथ परमाणौ जलत्वन्न स्यात् तत्र जन्यस्नेहा-

भावात् । तस्य च नित्यस्य स्वरूपयोग्यस्य फलोपधायकत्वावश्य-म्भावनियमादिति चेन्न । जन्यस्नेहजनकतावच्छेदिकाया जन्यजल-त्वजातेः सिद्धौ तदवच्छिन्नजनकतावच्छेदकतया जलत्वजाति-सिद्धेः । जलीयं शरीरमयोनिजमेव वरुणलोके शास्त्रैक-प्रामाण्यात् । पार्थिवादिभागयोगाद्घनीभावेन कार्यक्षमत्वमाहुः ॥ एवं वायुतेजसोरपि जलीयशरीरेन्द्रियाविषयलक्षणानि नि-र्वचनं च प्राग्वत् । इन्द्रियं रसनम्, रसरसत्वरसाभावग्राहकम् । तत्र मानन्तु—रसनेन्द्रियं जलीयम्, गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्ज-कत्वात्, सक्तुरसाभिव्यञ्जकोदकवत् इत्यनुमानम् ॥ विषयो हिमनद्यादिः ॥ न च, हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्, ऊष्मणा विलीनयोस्तयोर्जलत्वस्य प्रत्यक्षासिद्धत्वात् । यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वासिद्धेः शैत्या-तिशयेन प्राग्द्रवत्वस्य निरोधात्काठिन्यप्रत्ययः ॥ उष्णस्पर्शवत् तेजः । उष्णस्पर्शेत्यत्र जलवन्निर्वचनाद्व्याप्तिनिवृत्तिः । जला-दावुष्णस्पर्शः परम्परया पूर्ववद्भासते । जन्योष्णस्पर्शसमवायिकार-णतावच्छेदकन्तेजस्त्वं जातिविशेषः । तस्य परमाणुवृत्तित्वन्तु जल-त्वस्येवानुसंधेयम् । शरीरादिलक्षणानि तन्निर्वचनञ्च प्राग्रीत्या । इन्द्रियञ्चक्षुः रूपस्य ग्राहकम् । महत्त्वोद्भूतरूपवद्द्रव्यतद्वृ-त्तिकर्मसामान्यसमवायसंख्यापरिमाणपृक्त्वसंयोगविभागपरत्वापरत्व-द्रवत्वानामपि स्नेहमपि चाक्षुषमाहुः । चक्षुषस्तैजसत्वे मानन्तु चक्षुरिन्द्रियन्तैजसम्, परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यं-

जकत्वात्, प्रदीपवत् । इत्यनुमानम् ॥ उच्छृङ्खलास्तु-चक्षुर्गोलका-तिरिक्तमिन्द्रियन्नाङ्गीकुर्वन्ति,स्वस्थानस्थितमेव तद्विषयङ्गृह्णात्यतः अप्राप्यप्रकाशकारीति वदन्ति । शालिकाचार्यास्तु प्रसिद्धचक्षु-रिन्द्रियं बाह्यालोकश्च चक्षुरिन्द्रियान्तरमारभते, तेन शाखाचन्द्रम-सोर्युगपद्ग्रहः इत्याद्याहुः ॥ परे तु दर्पणे इव चक्षुषि वस्तु प्रतिबिं-बति ततः प्रत्यक्षमित्याहुः ॥ तैजसो विषयश्चतुर्विधः--भौम-दिव्योदर्याकरजभेदात् । पार्थिवमात्रेन्धनं तेजः भौमम्, यथा--अग्निः । अबिन्धनन्तेजः दिव्यम्, यथा--विद्युत् । अबि-न्धनत्वे तु मानं मृग्यम् । पार्थिवजलोभयेन्धनन्तेजः उदर्यम्, जाठरोऽग्निः । अनुभयेन्धनन्तेजः आकरजम्, सुवर्णरजतमण्यादि । तस्य तैजसत्वे मानन्तु सुवर्णन्तैजसम्, असति प्रतिबन्धके अत्यन्ता-ग्निसंयोगे सत्यपि अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् । यन्नैवं तन्नैवं यथा-घृतादिपृथिवी,इति।अत्यन्ताग्निसंयोगिपीतिमगुरुत्वाश्रयः विजा-तीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः । अत्यन्ताग्निसंयोगे सत्यपि पूर्वरू-पविजातीयरूपानधिकरणत्वे सति पृथिवीत्वात्, जलमध्यस्थपीतप-टवत् इति वानुमानम् ॥ "अग्नेरपत्यम्प्रथमं हिरण्यम्" इति श्रुतिश्च । पार्थिवांशेनाभिभवाद्भास्वररूपोष्णस्पर्शयोरग्रहः । बलवत्स-जातीयसंबंधकृतमग्रहणमभिभवः, संबन्धस्थाने ग्रहणेति वा । यदि तु स्वर्णादौ वह्निसंयोगेन द्रवत्वनाशविलंबे तैजस-त्वं न हेतुः अपि तु काठिन्यमेवेति स्वर्णाद्यपि पार्थिवमेव । अत एव वैद्यके स्वर्णादिभस्मीकरणप्रसिद्धिः, अनुमानन्त्वप्रयो-

जकम् । श्रुतौ तु स्वच्छत्वसाधर्म्यात्तैजसोक्तिरित्युद्भाव्यते तर्हि समाधानान्तरमन्वेष्यम् । केचित्तु उद्भूतरूपस्पर्शमग्न्यादि, अनुद्भूतरूपस्पर्शं बाष्पचक्षुरादि, उद्भूतस्पर्शानुद्भूतरूपन्तप्तजलादिस्थं तेजः उद्भूतरूपानुद्भूतस्पर्शम् दीपप्रभादि, इति चतुर्भेदतामाहुः । तेषां सुवर्णस्य प्रथमे प्रकारेन्तर्भावः सम्पाद्यः । इति संक्षेपः ॥ रूपरहितत्वे सति स्पर्शवान् अपाकजानुष्णशीतस्पर्शवान् वा वायुः । आद्यस्य निर्वचनं च रूपरहितस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमान् वायुः।नात उत्पन्नविनष्टादावव्याप्तिः । द्वितीयस्य तु अपाकजानुष्णाशीतस्पर्शवन्मात्रवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमान् वायुः । तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वं तत्साक्षाद्व्याप्यत्वम्।उक्तस्पर्शसमवायिकारणतावच्छेदकतया वायुत्वजातिसिद्धिः । परमाणुवृत्तित्वं पूर्ववदूह्यम्।शरीरादिलक्षणानि निर्वचनं च पूर्वरीत्या।इन्द्रियं त्वक् सर्वशरीरवृत्तिः।तत्तुस्पर्शमहत्त्वोद्भूतरूपस्पर्शवद्द्रव्यतद्वृत्तिकर्मसामान्यसमवायसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहानामपि ग्राहकम् । तस्य वायवीयत्वे त्वगिन्द्रियं वायवीयं, द्रव्यत्वे सति रूपादिषु पंचसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्, अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् इत्यनुमानम्मानम्॥ शरीरान्तःसञ्चारी वायुः प्राणः विषयेन्तर्भवति । स चैकोप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते । विषयतासंबन्धेन बहिर्द्रव्यप्रत्यक्षम्प्रति समवायसंबंधेन महत्त्वविशिष्टोद्भूतरूपमुद्भूतस्पर्शश्च कारणम् इति मते वायुर्न प्रत्यक्षः किन्तु योयं वृक्षादिषु कम्पमानेषु प्रतीयते स स्पर्शः किञ्चि-

दाश्रितः गुणत्वात्, रूपवत्, इत्यनुमानेन तदाश्रयो वायुः सिद्धयति इति प्राञ्चः ॥ नव्यास्तु बहिर्द्रव्यचाक्षुषम्प्रति महत्त्वविशिष्टमुद्भूतरूपन्त्वाचम्प्रतिताद्दश उद्भूतस्पर्शः कारणमिति वायुः प्रत्यक्ष इत्याहुः । उद्भूतत्वञ्च प्रत्यक्षयोग्यरूपरसाद्यन्यतमत्वम् ॥ अथ कार्यद्रव्योत्पत्तिक्रमः ॥ ईश्वरस्य सृष्टिचिकीर्षया परमाणुषु कर्म ततस्तयोर्द्वयोः संयोगः ततो द्यणुकोत्पत्तिः । तत्र परमाणू समवायि कारणम् । तद्द्वयसंयोगोऽसमवायी ईश्वरः । तज्ज्ञानेच्छाकृतयोऽदृष्टं प्रागभावप्रतिबन्धकाभावौ च निमित्तानि कार्यमात्रम्प्रति निमित्तत्वात् । कालदिशावपि कार्यमात्रम्प्रति निमित्ते आहुः तत उक्तरीत्या त्रिभ्यो द्यणुकेभ्यस्त्र्यणुकम् । एवञ्चतुरणुकादिक्रमेण महान्तो भूजलतेजोवायव उत्पद्यन्ते । न्यायमते समवायिकारणात्कार्य्यं भिन्नमेव । एवमीश्वरस्य सञ्जिहीर्षया परमाणुषु कर्म । ततस्तद्द्वयविभागः । ततस्तत्संयोगनाशः । ततो द्व्यणुकनाशः । ततस्त्र्यणुकनाशः । एवं क्रमेण महापृथिव्यादीनान्नाशः । परमाणव एव नित्या दोधूयमानास्तिष्ठन्ति । अयं सर्वकार्यद्रव्यध्वंसरूपोऽवान्तरप्रलयः । महाप्रलयश्चाऽनित्यानान्द्रव्यगुणकर्मणान्नाश इत्याहुः । अवान्तरप्रलयसमयश्च सर्वजीवानाम्फलानुन्मुखादृष्टकावस्था । अत्रैव पौराणिकाद्युक्तयोर्ब्राह्मप्राकृतिकलययोरन्तर्भावः । महाप्रलयश्च वेदान्तादिमते आत्यंतिकापरपर्यायो मोक्षावस्था । प्रलयाश्च "दैनन्दिनोन्वहम्प्राणिनाशो ब्राह्मो विधेर्निशि । विधेर्मृतौ प्राकृतिको मोक्ष आत्यन्तिको लयः ॥" मीमांसकास्तु संसारस्यानादित्वात्सृष्टिप्रलयौ

नाङ्गीकुर्वन्ति। द्रव्यनाशे समवायिनाशं द्व्यणुकनाशे चासमवायिनानाशं कारणमाहुः प्राञ्चः। सर्वत्रासवायिनाशं नव्याः। अत्रबौद्धाः परमाणुपुञ्जैरेवोपपत्तेरवयविकल्पना व्यर्था दूरस्थकेशवत्परमाणोरप्रत्यक्षत्वेपि तत्समूहस्य प्रत्यक्षत्वात्, एको धान्यराशिरितिवदेको घट इति प्रतीतेरप्युपपत्तिरित्याहुः। तन्न। परमाणोरतीन्द्रियत्वेन तत्समूहस्याप्यतीन्द्रियत्वात्। दूरस्थकेशस्तु नातीन्द्रियः। अस्माकन्तु अदृश्येन द्व्यणुकेन जनितस्त्रसरेणुर्महत्त्वात्प्रत्यक्षः।त्वन्मते परमाणोर्महत्त्वाभावान्नैतत्सम्भवति॥ शब्दसमवायिकारणमाकाशः। स च विभुर्नित्यश्च। सर्वमूर्त्तद्रव्यसंयोगित्वं परममहत्परिमाणवत्त्वं वा विभुत्वम्। परिच्छिन्नपरिमाणवत्त्वं क्रियाऽऽश्रयत्वं वा मूर्त्तत्वम्। आकाशत्वन्तु न जातिः, एकव्यक्तिवृत्तित्वात्॥ जातिबाधका वक्ष्यन्ते। एवं कालत्वदिक्त्वे अपि। चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वेन शब्दस्य गुणत्वे तेन च द्रव्याश्रितत्वे श्रोत्रग्राह्यत्वेनाष्टद्रव्यानाश्रितत्वे च सिद्धेऽष्टातिरिक्तं द्रव्यमाकाशः सिद्ध्यति। न च वायोरवयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुगुणत्वाभावात्। अयावद्द्रव्यभावित्वञ्च स्वाश्रयनाशजन्यनाशप्रतियोगियत्तद्भिन्नत्वम्।अङ्ग्रेजास्तु यन्त्रेण घटाद्युदराद्वायौ निष्काशिते शब्दो न भवत्येवेति शब्दोयावद्द्रव्यभाव्येवेति। वायुरपि न स्वतःक्रियः। किन्तु शैत्यौष्ण्यवशादाघाताद्वा तत्र क्रियोत्पद्यते इति प्राहुः। आकाश एक एव घटाकाशमठाकाशादिकन्तु घटाद्युपाधिभेदात्। उपाधिश्चावच्छेदकः। आ-

काशस्य शरीरादि नास्ति। किन्तु शब्दग्राहकमिन्द्रियं श्रोत्रम् । तच्च कर्णशष्कुल्यवच्छिन्नो नभःप्रदेशः॥ परे तु आवरणाभावादतिरिक्तमाकाशन्नांगीकुर्वन्ति॥ अतीतादिव्यवहारहेतुः कालः । व्यवहारः शब्दप्रयोगः । अयमस्माज्ज्येष्ठोयमस्मात्कनिष्ठ इति ज्येष्ठकनिष्ठशरीरनिष्ठे परत्वापरत्वे असमवायिकारणजन्ये,जन्यगुणत्वात्, रूपवत्, इत्यनुमानबोधितकालशरीरसंयोगरूपासमवायिकारणाश्रयतया कालः सिद्ध्यति । यद्वा—परत्वजनकं बहुतररविक्रियाविशिष्टशरीरज्ञानम्—परम्परासंबन्धघटकसापेक्षम्, साक्षात्संबंधाभावे सति विशिष्टज्ञानत्वात्, लोहितः स्फटिक इति ज्ञानवत्, इत्यनुमानं काले मानम्॥ परम्परासंबन्धश्च स्वसमवायिसंयुक्तसंयोगः।कालश्च कालिकसंबंधेन सर्वाधारः नित्यः कार्यमात्रेनिमित्तकारणञ्चेत्याहुः। काल एकोप्युपाधिवशादतीतादिं क्षणादिं च व्यपदेशं लभते । तत्र रविक्रिया उपाधिरिति प्राञ्चः ॥ जन्यमात्रं कालोपाधिरिति नव्याः ॥ तत्र वर्त्तमानध्वंसप्रतियोगित्वम् अतीतत्वम् । स्वध्वंसप्रागभावानधिकरणकालवृत्तित्वं वर्त्तमानत्वम् । वर्त्तमानप्रागभावप्रतियोगित्वं भविष्यत्त्वम्॥क्षणोपाधिश्च--स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, प्रथमक्षणोपाधिः । स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टस्वजन्यविभागः, द्वितीयक्षणोपाधिः । पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावः, तृतीयक्षणोपाधिः उत्तरदेशसंयोगावच्छिन्नं कर्म, चतुर्थक्षणोपाधिः । ततश्च क्रियाक्रियातो विभागः पूर्वसंयोगनाशः उत्तरदेशसंयोगः । ततश्च

कर्मान्तरोत्पत्त्या क्षणादिव्यवहारः । महाप्रलये क्षणादिव्यवहारोऽस्ति चेद्ध्वंसेनोपपाद्यः॥ प्राच्यादिव्यवहारहेतुः दिक् । अयमस्माद्दूरेयमस्मान्निकटे इति परत्वापरत्वे असमवायिकारणजन्ये जन्यगुणत्वात्, घटनिष्ठरूपवत्, इत्यनुमानबोधितदिक्छरीरसंयोगरूपासमवायिकारणाश्रयतया दिक् सिध्यति। यद्वा-दैशिकपरत्वे यद्बहुतरमूर्त्तसंयोगविशिष्टशरीरज्ञानम्,तत्संबन्धघटकतया पूर्ववद्दिक् सिध्यति। सापि दैशिकसंबंधेन जगदाधारः नित्या सर्वकार्यनिमित्तकारणं चेत्याहुः। उदयाद्रिसन्निकृष्टे मूर्त्ते प्राची, तद्विप्रकृष्टे प्रतीची, मेरुसन्निकृष्टे उदीची, तद्विप्रकृष्टेऽवाची। एवमुदयाद्रिमेरुसन्निहिते ऐशानीत्यादिविदिशोपि ज्ञेयाः। दीधितिकृता तु आकाशकालदिश ईश्वरेन्तर्भाविताः।प्रतीतेरन्यथापि सिद्धेः कैश्चिन्निरस्ता अपि ॥ ज्ञानाद्यधिकरणमात्मा। स द्विधा—जीवात्मा परमात्मा च। जीव एव क्षेत्रज्ञ उच्यते। परमात्मैव ईश्वरो ब्रह्म चोच्यते। तत्र परमत्वं सृष्ट्यादिकर्तृत्वरूप उत्कर्षः। तत्र सुखदुःखादिसमवायिकारणं जीवात्मा जन्यज्ञानाद्यधिकरणं वा नित्यज्ञानाद्यधिकरणमीश्वरः। सुखादिकारणतावच्छेदकतया आत्मत्वजातिः सिद्ध्यति। सा चेश्वरेप्यस्ति। धर्माधर्मशरीरादिकारणान्तराभावान्न सुखादेरुत्पत्तिः। नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमस्याप्रयोजकत्वात् इत्याहुः॥ केचित्तु ईश्वरे सा जातिर्नास्ति ज्ञानवत्त्वे न च द्रव्यविभाग इत्याहुः। आत्मपदशक्यतावच्छेदकतया वा तस्याः सिद्धिः। जीवात्मनि प्रमाणन्तु अहं सुखी-

त्यादि मानसप्रत्यक्षम् । 'आत्मा तावन्न प्रत्यक्षः' इति भाष्यन्तु अन्यात्मपरम् । यद्वा--बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रिताः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वात् । यो यदनाश्रितो गुणः स तदतिरिक्तद्रव्याश्रितः । यथा पृथिव्याद्यनाश्रितः शब्दस्तदतिरिक्तद्रव्याश्रितः । इत्यनुमानम्मानम् । अष्टद्रव्यानाश्रितत्वे च बुद्ध्यादयः न भूतगुणाः मानसप्रत्यक्षविषयत्वात् । यन्नैवं तन्नैवम् । यथा--रूपादिः, बुद्ध्यादयः न दिक्कालमनसां गुणाः, विशेषगुणत्वात्, रूपवत् । इति माने बुद्ध्यादेर्विशेषगुणत्वे च बुद्ध्यादयः विशेषगुणाः । गुणत्वे सति एकेन्द्रियग्राह्यत्वात्, रूपवत् इति मानन्तेषां गुणत्वे च बुद्ध्यादयः गुणाः, अनित्यत्वे सति एकेन्द्रियग्राह्यत्वात्, गन्धवत् । इत्यनुमानम्मानम् । यद्वा--चक्षुरादीन्द्रियं सकर्तृकं करणत्वात्,कुठारवत् । इत्यनुमानञ्जीवे मानम् । नन्वीश्वरे किम्मानम्प्रत्यक्षन्तु नास्त्येव, वेदस्य प्रामाण्यन्तु ईश्वरानंगीकर्त्तारम्प्रति वक्तुमशक्यमिति चेत्, अंकुरादिकं कर्तृजन्यं कार्यत्वादित्यनुमानेनेश्वरसिद्धेः कर्त्तारमन्तरेण तदुत्पत्त्यंगीकारे घटादावपि तथात्वापत्तेः । स्वेदजादीनामपीश्वरः कर्त्ता । कर्तृत्वञ्च कृतिमत्त्वम् । अनुमानान्तराणि च विस्तरभयान्न लिखितानि ॥ ईश्वरश्च शरीररहित एव कार्योत्पादकः । ईश्वरस्य परमाणव एव शरीरमिति केचित् । आकाश इत्यपरे। भूतावेशन्यायेनेत्यन्ये। ब्रह्मविष्णवादीनान्तच्छरीरत्वम्पौराणिकाः । स चेश्वरः कार्य्यमात्रम्प्रति निमित्तकारणम् । सर्गादौ परमाणुना द्व्यणुकं करिष्यामीति ज्ञानस्यावश्य-

कत्वेन तत्र शरीरादेर्ज्ञानकारणस्याभावात्तज्ज्ञानस्य नित्यत्वमाहुः। एवमिच्छाकृत्योरपि । केपि तत्र नित्यं सुखमाहुः । स चेश्वरो विभुरेकः । तस्य सर्वदा अपरोक्षमेव ज्ञानम् । तस्येच्छादिकं क्वापि निष्फलन्न भवति । स च नित्यं मुक्त एव । जीवश्च संसारदशायां शरीररहितो न भवति । यथा—कर्मसुखादिकं नानायोनिषु भुंक्ते तत्त्वज्ञानसाध्यमोक्षदशायान्तु शरीररहितस्तिष्ठति सुखादिवैचित्र्यात्। प्रतिशरीरम्भिन्नो विभुर्नित्यश्च । अणुत्वे सर्वशरीरव्यापिसुखाद्यनुलम्भ-प्रसंगः। मध्यमत्वेऽनित्यत्वापत्त्याकृतनाशाऽकृताभ्यागमप्रसंगः।अयञ्चे-न्द्रियादीनाम्परम्परया चैतन्यसम्पादकः ज्ञानसुखादिविशेषगुणसंबन्धे मनोमात्रप्रत्यक्षश्च । अस्य परशरीरे स्थितस्य इदं शरीरञ्चेतना-धिष्ठितञ्चेष्टावत्त्वात्, रथवत् इत्यनुमानेन बोधः॥ अत्र शून्यवादिनो माध्यमिकाः सुप्तोत्थितस्य सुषुप्तावहन्नासमित्यनुभवाच्छून्यमेवा-त्मा । तन्न । तादृशानुभवस्य ज्ञानाभावपरत्वात् । क्षणिकविज्ञान-वादिनो योगाचारास्तु क्षणिकविज्ञानमात्मा, तत्र अयं घट इत्यादिप्रवृत्तिविज्ञानम् । सुषुप्तावहमित्यालयविज्ञानम् । ज्ञानघट-सुखादिकं तस्यैवाकारविशेषः । तदन्यवस्तुन एवाप्रसिद्धेः इत्याहुः । तन्न।तस्य क्षणिकत्वे द्वितीयक्षणे चाभावे पूर्वानुभूतपदार्थस्मरणा-नुपपत्तेः, अनुभवस्मरणयोः सामानाधिकरण्यनियमात् ॥ सौत्रा-न्तिकास्तु ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मेत्याहुः । तदपि न।घटादेस्तथात्वे मानाभावात् ॥ चार्वाकास्तु स्थूलोहं जानाम्य-हमित्यादिज्ञानसामानाधिकरण्याद्देह एवात्मा केवलपार्थिवस्याचेतन-

त्वेऽपि भूतचतुष्टयसंयोगवशेन चैतन्यम् । किण्वादिभ्यो मदशक्तिवत्, इत्याहुः।तन्न।मृतशरीरेपि ज्ञानापत्तेः,अवयवोपचयापचयैः शरीरस्य नानात्वेन पूर्ववद्दोषाच्च, धनित्वरङ्कत्वादिनानाविध्यकारणस्यादृष्टस्यावश्यकत्वेन तदाश्रयस्यातिरिक्तस्यावश्यकतरत्वात् ॥ एकदेशिन इन्द्रियाणामात्मत्वमाहुः । तन्न । योहं घटमद्राक्षं सोहं स्पृशामीत्यभेदप्रतीत्यनुपपत्तेः॥मन आत्मेत्यन्ये । तदपि न, तस्याणुत्वेन सुखाद्यनुपलम्भापत्तेः ॥ प्राण आत्मेत्यन्ये । तदपि न, अनित्यत्वेन पूर्ववद्दोषात् । एतेन देहातिरिक्तो देहपरिमाणो दीपप्रभावत्संकोचविकासशालीति दिगम्बरमतमपि प्रत्युक्तम् ॥ वैभाषिकजैनादिमतस्थस्कन्धपञ्चकसप्तभङ्गीनयादिप्रदर्शनन्तत्खण्डनञ्च विस्तरभयान्नोक्तम् ॥ सांख्यास्तु आत्मा कर्तृत्वरहितश्चैतन्यरूपः । प्रकृतिः कर्त्री, नित्या जडा च।प्रकृतेर्महत्तत्वन्तदेव बुद्धितत्त्वम्।ततोहंकारः। ततः शब्दस्पर्शरूपरसगन्धास्तन्मात्राणि द्रव्यरूपाणि । ततः श्रोत्रादीनि वागादीनि चेन्द्रियाणि मनः पञ्चभूतानि च । तैः शरीरमुत्पद्यते । तत्सम्बन्धात्प्रकृतिरेव करोति, तद्भेदाग्रहाच्चात्मनोऽहं करोमीत्यभिमानो जायते इत्यूचुः। तन्न। अहं करोमि जानामीति कृतिज्ञानयोः सामानाधिकरण्यानुभवविरोधात्प्रकृतौ मानाभावात्, तस्या जडत्वेन कर्तृत्वासम्भवाच्चेत्यन्यत्र विस्तरः ॥ वेदान्तिनस्तु, एकं ब्रह्मैवात्मास्ति ज्ञानरूपं च तदेव चाविद्यावशाज्जीव उच्यते,तत्रैव ब्रह्मणि रज्जौ सर्पवदध्यस्तो मिथ्यापि संसारो भासते । तन्न । जगतो मिथ्यात्वासम्भवात् । मिथ्यात्वश्रुतिस्त्वनित्यत्वपरा दृष्टान्ते प्रसिद्ध-

स्यैव सर्पादेर्भानम् । स्वप्नेपि प्रसिद्धस्यैव वस्तुनो विपर्ययेण भानमात्रम् । अद्वैतश्रुतिरप्यनुपमेयत्वपरा जगतो ब्रह्मत्वोक्तिस्तद्व्याप्यत्वपरा । नापि ज्ञानस्वरूप आत्मा निर्विषयज्ञाने मानाभावेन सविषयत्वे वाच्ये सर्वविषयत्वे सार्वज्ञ्यापत्तिः । यत्किञ्चिद्विषयत्वे विनिगमनाविरहः । विनिगमना चैकतरपक्षपातिनी युक्तिः । नापि जीवब्रह्मणोरैक्यम्, सुखादिवैचित्र्येण जीवस्यात्यन्तविलक्षणत्वात् । ब्रह्मत्वश्रुतिः साम्यपरा॥मतान्तरलेखस्तत्खण्डनञ्च विस्तरभयान्न कृतम् ॥ सुखाद्युपलब्धिसाधनमिन्द्रियम्मनः ॥ स्पर्शरहितत्वे सति क्रियावद्वा ॥ मानसप्रत्यक्षकरणतावच्छेदकतया मनस्त्वजातिसिद्धिः।सुखादिप्रत्यक्षं सकरणकम्, जन्यप्रत्यक्षत्वाद्रूपप्रत्यक्षवदित्यनुमानेन मनःसिद्धिः । मनश्च प्रत्यात्मनियतत्वादनन्तम् । अणुरूपन्तत एव नित्यं च । मध्यमत्वेऽनित्यत्वप्रसक्तिः, विभुत्वे चात्मसंयोगस्य नित्यत्वापत्त्या सुषुप्त्यभावप्रभावप्रसंगः । मम तु मनसः पुरीतत्प्रवेशे सुषुप्तिः । ननु मनसोऽणुत्वे युगपत्स्पार्शनचाक्षुषादिकमनुभूयमानं विरुध्यतेति चेत्, उत्पलपत्रशतभेदयौगपद्यवन्मनसो वेगवशाद्युगपत्प्रत्ययस्य भ्रमत्वात् । अष्टावधानस्थलेप्येवम् । वेदान्तिनस्तु मनसो मध्यमपरिमाणत्वं मोक्षपर्यन्तं स्थायित्वञ्चाङ्गीकुर्वन्ति ॥ प्रौढप्रकाशकतेजःसामान्याभावे तमोन्तर्भवति।तत्र गुणक्रियादिप्रतीतिर्भ्रम एव, उष्णस्पर्शस्यापलापासंभवात्तेज आवश्यकम् । पृथिव्यादीनां गुणाः पूर्वमुक्ताः ॥ इति न्यायप्रदीपे द्रव्यनिरूपणन्द्वितीयः परिच्छेदः ॥ २ ॥

द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः।गुणत्वजातिसिद्धिश्च गुण-निष्ठकारणतावच्छेदकतया गुणनिष्ठगुणपदशक्यतावच्छेदकतया वा। गुणविभाजकानि रूपत्वादीनि जातयः॥ केचित्संस्कारत्वन्न जाति-रित्याहुः। त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकोपाधिमत् रूपम्। तच्च शुक्लनीलपीतरक्तहरितकपिशाचित्रभेदात्सप्तधा। वस्तुतो वर्णा इतोऽप्यधिकाः प्रसिद्धाः॥ अङ्गेजास्तु नीलपीतरक्ता-ख्यास्त्रय एव मुख्या वर्णा अन्ये सर्वेऽपि तद्योगजा इत्याहुः। तेषु च शुक्लत्वादयो जातयः। अग्रेऽपि रसत्वगन्धत्वादिव्याप्याः मधुरत्वसौरभत्वादयोऽपि जातयो बोध्याः। एकैका एव नीलादिगुणव्यक्तयो यावन्नीलादिद्रव्यव्यक्तिगता नित्या इति केचित्। नीलो नष्ट इत्यादिप्रतीतेर्नैतत्। रूपञ्च भूम्यप्तेजोवृत्ति। भूम्यां सर्वप्रकारम्। अभास्वरं शुक्लं जले, भास्वरं शुक्लन्तेजसि। यमुनाजलादौ नीलस्य वह्निसुवर्णादौ पीतस्य च प्रतीतिः स्वसमवायिसंयोगसंबन्धेन पृथिव्यंशसंबन्धादेव। अत एव जलस्य वियति विक्षेपे धवलिमोपलब्धिः। न च तत्र तद्रूपस्य चाक्षुषत्वाभावे वह्निसुवर्णदेरप्यचाक्षुषत्वापत्तिः। अन्यरूपेणापि द्रव्यचाक्षुषसम्भवात्। शंखस्येव पित्तपीतिम्ना, शुक्लनीलरक्तैस्त्रि-भिस्तन्तुभिरारब्धे पटे चित्रं रूपम्। तस्य नीरूपत्वे पटाप्रत्यक्षत्वाप-त्तेः। एवं च रूपस्य व्याप्यवृत्तितापि न विरुध्यते। एवं चित्रस्प-र्शोऽपीति प्राञ्चः। अन्ये तु अव्याप्यवृत्तीनि अवयवरूपाण्येव तत्र भान्ति न चित्रमतिरिक्तमित्याहुः। एवं स्पर्शेऽपि, उद्भूतानुद्भूतभेदा-

दपि रूपादिकं द्विधा—भर्जनकपालस्थवह्न्यादौ ग्रीष्मोष्मचक्षुरादौ चानुद्भूतं, घटादावुद्भूतम्॥ रसनेन्द्रियग्राह्यवृत्तिगुणत्वव्याप्यजातिमान् रसः । स च मधुराम्ललवणकटुकषायतिक्तभेदात्षोढा, पृथिवीजलवृत्तिः । पृथिव्यां सर्वप्रकारः । जले तु मधुर एव । जंबीररसादावम्लत्वादिकमाश्रयोपाधिजम् । जले तु माधुर्यस्यानुत्कटत्वान्न गुडादिवद्भानम् ॥ केचित्तु हरीतक्यादिभक्षणं जलमाधुर्यव्यञ्जकमित्याहुः ॥ घ्राणग्राह्यवृत्तिगुणत्वव्याप्यजातिमान् गंधः । पृथिवीमात्रवृत्तिः । स द्विधा सुरभिरसुरभिश्च । जलवाय्वोस्तु तत्प्रतीतेर्हेतुः प्रागुक्तः । एवमग्रेप्यन्यस्थस्यान्यत्र प्रतीतिस्तत्रतत्रानुसंधेया । चक्षुरग्राह्यत्वग्ग्राह्यवृत्तिगुणत्वव्याप्यजातिमान् स्पर्शः । स च शीतोष्णानुष्णाशीतभेदात्त्रिधा, पृथिव्यादिचतुष्कवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथवीवाय्वोः । भूतचतुष्के स्वस्वांशपरिमाणमुष्णत्वं तदभाव एव शीतत्वं, नातिरिक्तः स्पर्श इति त्वङ्ग्ज्ञाः ॥ काठिन्यमृदुत्वभेदादपि स्पर्शो द्विधा, तदुभयं संयोगविशेष एवेति तत्त्वम् । न चांगुलिद्वयसंयोगस्येव काठिन्यस्यापि चाक्षुषत्वापत्तिः, अनतिश्लिष्टस्यैव संयोगस्य चाक्षुषत्वात् । न हि कपालद्वयसंयोगः सन्नपि चक्षुषा गृह्यते । उक्तं रूपादिचतुष्टयम्पृथिव्याम्पाकजं नित्यञ्च अन्यत्र पाकजन्नित्यमनित्यञ्च । पाकश्च तेजःसंयोगः । पृथिव्यामग्निसंयोगाद्रूपादिपरावृत्तिरुपलभ्यते । तत्र परमाणावेव पाक इति पीलुपाकवादिनो वैशेषिकाः । अवयविनावष्टब्धेष्ववयवेषु पाको न संभवति परन्तु वह्नि-

संयोगेनावयविनाशे परमाणुषु पाकः । पुनर्द्व्यणुकादिक्रमाद्घटोत्पत्तिः । तत्र वह्निसंयोगात्परमाणौ कर्म । ततः क्रमेण परमाण्वन्तरेण विभागः संयोगनाशः, द्व्यणुकनाशः १ परमाणौ श्यामादिनाशः २ रक्ताद्युत्पत्तिः ३ आरम्भानुगुणा क्रिया ४ विभागः ५ पूर्वसंयोगनाशः ६ आरम्भकसंयोगः ७ द्व्यणुकोत्पत्तिः८ रूपाद्युत्पत्तिः९ इति वदन्ति।द्व्यणुकनाशमारभ्य गणनादियन्नवक्षणादशक्षणादिप्रक्रिया विस्तरभयान्नोक्ता ॥ पिठरपाकवादिनो नैयायिकास्तु । अवयविनां सच्छिद्रत्वादन्तःप्रविष्टैरग्न्यवयवैः परमाण्वादिघटान्तानामपि पाकः सम्भवत्येवेति वदन्ति ॥ एकादिव्यवहारविषयो गुणः संख्या । एकादिशब्दप्रवृत्तिनिमित्तं वा । व्यवहारो ज्ञानं शब्दप्रयोगो वा । सा च नवद्रव्यवृत्तिः । संख्या च एकत्वानेकत्वभेदाद्द्विधा । तत्र द्वित्वादिरनेकत्वरूपा, एकत्वादिः परार्द्धपर्यन्ता, व्यवहारे संख्यानन्त्ये तावत्येव प्रमाणाभावात् । ग्रहगणितादौ ततोप्यधिकसंख्यादर्शनात् । एकत्वन्नित्यगतं नित्यमनित्यगतमनित्यम् । द्वित्वादिकन्तु अपेक्षाबुद्धिजन्यत्वात् सर्वत्रानित्यमेव । यत्र नियमेनानेकान्येकत्वानि विषयीभवन्ति । तत्र द्वित्वत्रित्वसहस्रत्वादिसंख्योत्पद्यते । यत्र सेनादिषु नियमं विना अनेकान्येकत्वानि विषयीभवन्ति, तत्र बहुत्वसङ्ख्योत्पद्यत इति केचित् । त्रित्वादिरूपैव बहुत्वसंख्या नातिरिक्तेत्यन्ये । एको द्वाविति प्रतीत्यभावादेको न द्वाविति प्रतीतेश्च द्वित्वादिसंख्यानां द्रव्ये पर्याप्तिलक्षणः संबन्धः स्वीक्रियते, तेन संबन्धेन द्वित्वं द्वयोरेव

घटयोस्तिष्ठति । एवं त्रित्वादिकं त्र्यादिष्वेवेति । कारणगतमेकत्वन्द्वित्वादेरसमवायि कारणम् । घटद्वयत्रयादिसन्निकर्षादयमेकोयमेक इति अनेकैकत्वज्ञानमेवापेक्षाबुद्धिः । ततो घटद्वये द्वित्वोत्पत्तिः । ततो द्वित्वत्वनिर्विकल्पकम् । तत इमौ द्वाविति द्वित्वप्रत्यक्षम् । तत्क्षण एवापेक्षाबुद्धेर्नाशः । ततो द्वित्वनाशः । तत्रापेक्षाबुद्धिनाशः कारणम् । एवं त्रित्वादावपि । अतीन्द्रिये द्वित्वादिकन्तु योगीश्वरापेक्षाबुद्ध्या जन्यते तन्नाशोपि तन्नाशादेव । योग्यविभुविशेषगुणानां द्विक्षणावस्थायित्वनियमेपि द्वित्वप्रत्यक्षनिर्वाहार्थमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं कल्प्यते । द्वित्वत्रित्वादिकं व्यासज्यवृत्ति इत्युच्यते । अनेकवृत्तितयैवात्मानं लभमानो धर्मो व्यासज्यवृत्तिः । एवं संयोगादिरपि । संख्याया गुणत्वेन द्रव्यमात्राश्रयत्वेपि एकं रूपम् इत्यादिप्रतीतिरेकार्थसमवायादित्याहुः॥ वस्तुतस्तु सप्तपदार्थाश्चतुर्विंशतिगुणा इत्यादिनिर्बाधप्रत्ययात्सर्वपदार्थवर्ति इतरव्यावृत्तत्वरूपं कैवल्यमेवैकत्वम् । अनेकान्येकत्वान्यपेक्षाबुद्धीनां विषयास्तत्समूह एव,द्वित्वादिकं तज्ज्ञानं च समूहावलंबनरूपमिति नातिरिक्ता संख्या कल्प्या॥ मानव्यवहारविषयवृत्तिगुणत्वव्याप्यजातिमत्परिमाणम्।सर्वद्रव्यवृत्ति। तच्चतुर्द्धा—अणुत्वमहत्त्वह्रस्वत्वदीर्घत्वभेदात् । तच्च नित्यगतं नित्यमनित्यगतमनित्यम् । आश्रयनाशात्तन्नाशः । अवयवापचयोपचयैरपि पूर्वद्रव्यन्नश्यत्येव । प्रत्यभिज्ञा तु सादृश्यप्रयुक्ता । अतस्तत्रापि परिमाणनाश आश्रयनाशादेव चतुर्विधमपि परममध्यमभेदेन द्विधा, परमे अणुत्वह्रस्वत्वे

परमाणुमनसोः । मध्यमे द्व्यणुके,।परमे महत्त्वदीर्घत्वे गगनादौ।मध्यमे घटादौ दीर्घत्वह्रस्वत्वे पृथक् परैर्नाङ्गीक्रियेते । अस्मान्मौक्तिकादिदं मौक्तिकमणु इत्यादिव्यवहारस्यापकृष्टमहत्त्वादिविषयत्वाद्गौणत्वम् । परिमाणं घटादौ कपालादिपरिमाणजम् । तूलादौ तूलावयवानाम्प्रचयाख्यशिथिलसंयोगजम्।द्व्यणुकत्र्यणुकयोः कारणसंख्याजन्यम्, अन्यथा परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमेनाणुजन्यस्याणुतरत्वप्रसङ्गात् इत्याहुः।वस्तुतस्तु व्यवहारमात्रबला यदि परिमाणपदार्थौ द्रव्यस्वरूपादतिरिच्यते तर्हि स एवतुलाघनविस्तारदैर्घ्यकालजभेदात्पंचधा । तत्र तुलामानं गुरुत्वम्,घनमानं महत्त्वम्, विस्तारमानं क्षेत्रफलन्निवर्त्तनादि, दैर्घ्यमानं दैशिकपरत्वम्, कालमानं कालिकपरत्वम् । अणुत्वह्रस्वत्वापरत्वानि तु अपकृष्टमहत्त्वाद्यर्थतया गुरुत्वाभावादौ लघुत्वादीनि इव महत्त्वाद्यभावेऽन्तर्भवन्ति । इदमस्मादणु इत्यादिगौणविषयो व्यवहारस्तु अपेक्षाबुद्धिजन्यो द्रव्यपरिमाणादिव्यवस्थापनाय न प्रभुः । एवं च द्व्यणुकादौ परिमाणमवयवसंख्याजन्यमित्यादिः क्लेशोपि निवर्त्तते । 'मानन्तुलाङ्गुलिप्रस्थैः' इत्यादिशास्त्रवृद्धव्यवहारोपि च सङ्गच्छते ॥

पृथग्व्यवहारविषयवृत्तिगुणत्वव्याप्यजातिमत् पृथक्त्वम् ॥ सर्वद्रव्यवृत्ति । तच्च संख्यावद्द्विधा—एकपृथक्त्वमनेकपृथक्त्वञ्च । अनेकपृथक्त्वञ्च द्विपृथक्त्वादिकम् । घटः पटात् पृथक् इत्येकपृथक्त्वम् । घटौ पटात्पृथगिति द्विपृथक्त्वम् । अत्राप्यपेक्षाबुद्धिप्रक्रिया संख्यावज्ज्ञेया नित्यत्वादिकमपि तस्य संख्यावदेव । वस्तु-

तस्तु पृथक्त्वमन्योन्याभाव एव, पञ्चमीप्रथमादिप्रयोगमात्रप्रयुक्तप्रतीतिवैलक्षण्यमात्रेण पदार्थान्तरकल्पनाया अन्याय्यत्वात् ॥

संयुक्तव्यवहारविषयवृत्तिगुणत्वव्याप्यजातिमान् संयोगः । सर्वद्रव्यवृत्तिरनित्यश्च, तन्नाशश्च क्वाप्याश्रयनाशात् । यथा—कपालनाशात्तत्संयोगनाशः । क्वापि स्वसमानाधिकरणविभागात्, यथा-पक्षिवृक्षविभागात्तत्संयोगनाशः । अयं च त्रिधा—पक्षिपर्वतादिसंयोगोन्यतरकर्मजः। मेषद्वयसंयोग उभयकर्मजः । हस्तवृक्षसंयोगात्कायवृक्षसंयोगः संयोगजः । कर्मजः पुनर्द्विधा—तत्राभिघातः शब्दकारणम्, नोदनन्तदकारणम् । स्पर्शवेगोभयवद्द्रव्यसंयोगः अभिघाताख्यसंयोगः । स्पर्शवद्द्रव्यसंयोगः नोदनाख्यसंयोगः॥ संयोगश्च मूर्त्तानां मूर्तैर्विभुभिश्च भवति, विभूनां विभुभिस्तु न भवति क्रियाभावात् ॥ मीमांसकास्तु विभुद्वयसंयोगमपि मन्यन्ते ।

संयोगनाशकत्वे सति संयोगजन्यः विभागः । व्यासज्यवृत्तिमात्रवृत्तिसंयोगावृत्तिगुणत्वसाक्षाद्व्याप्यजातिमान् विभागः सर्वद्रव्यवृत्तिरनित्यश्च । तन्नाशश्च क्वाप्याश्रयनाशात्, क्वाप्युत्तरदेशसंयोगात् । यथा—पक्षिवृक्षविभागस्य ययोरेव संयोगस्तयोरेव विभागः । मेरुकैलासौ विभक्ताविति व्यवहारो भाक्तः । विभागोपि अन्यतरकर्मजः, उभयकर्मजः विभागजश्चेति त्रिधा, उदाहरणमपि पूर्ववत् । विभागजविभागो द्विधा—कपालद्वयविभागात्कपालाकाशविभागः कारणमात्रविभागजः, हस्तवृक्षविभागात् । कायवृक्षविभागः कारणाकारणविभागजः ॥ वस्तुतः संयोगध्वंस एव

विभागः। न च वैपरीत्यं युक्तिसहम्, विभागस्य भिन्नत्वमङ्गीकुर्वतोपि तन्नाश्यसंयोगस्यावश्यकत्वात्। न च घटरूपाश्रयनाशेन तत्संयोगनाशस्थले घटो विभक्त इति प्रतीत्यापत्तिः, ध्वंसस्य स्वप्रतियोग्यधिकरणवृत्तितयाऽधिकरणस्य नाशे तत्प्रत्ययासंभवात्। अत एव विभागोपि ध्वंस इवानन्तः स्फुटं, प्रतीयते तन्नाशकथनं च ध्वंसनाशकथनसमानयोगक्षेमम् इति संक्षेपः॥

परव्यवहारविषयवृत्तिगुणत्वव्याप्यजातिमत् परत्वम्। अपरव्यवहारविषयवृत्तिगुणत्वव्याप्यजातिमत् अपरत्वम्। एते मूर्त्तद्रव्यवृत्तिनी, अनित्ये एव च, ते द्विविधे—दिक्कृते कालकृते च। दूरस्थे दिक्कृतं परत्वं,समीपस्थे अपरत्वम्। ज्येष्ठे कालकृतं परत्वं कनिष्ठे अपरत्वम्, दिक्संयोगासमवायिकारणकं परत्वं दैशिकपरत्वम्। दिक्संयोगासमवायिकारणकमपरत्वं दैशिकापरत्वम्। कालसंयोगासमवायिकारणकं परत्वं कालिकपरत्वम्। कालसंयोगासमवायिकारणकमपरत्वं कालिकापरत्वम्। दैशिकयोर्बहुतराल्पतरमूर्त्तसंयोगविशिष्टशरीरज्ञानात्, कालिकयोश्च तादृशरविक्रियाविशिष्टशरीरज्ञानादुत्पत्तिः। दैशिकयोर्दिक्पिंडसंयोगः, कालिकयोः कालपिण्डसंयोगः असमवायिकारणम्। विप्रकृष्टसन्निकृष्टज्ञानरूपापेक्षाबुद्धिनाशान्नाशः॥ वस्तुतस्तु संख्यावत् परत्वापरत्वे अपि न गुणौ। अपि तु संयुक्तमूर्त्तरविक्रियागते बहुतरत्वाल्पतरत्वे एव। तत्त्वं तु प्रागुक्तम्॥ आद्यपतनासमवायिकारणवृत्तिगुणत्वव्याप्यजातिमत् गुरुत्वम्। द्वितीय-

स्य तु वेगोऽसमवायी। ये तु द्वितीयपतनस्यापि वेगमसमवायिकारण-न्न स्वीचक्रुस्तन्मते आद्यपदन्न देयम् । तच्च रक्तिकामाषकादिभेदा-दनेकधा । पृथिवीजलवृत्ति॥ अङ्गेजास्तु वायुतेजसोरपि गुरुत्वमाहुः। तत्र संयोगवेगप्रयत्नाः पतनप्रतिबन्धकाः। आम्रादौ वृन्तदृढसंयोगः, बाणादौ वेगः, हस्तधृतवस्त्वादौ प्रयत्नः । इदं चातीन्द्रियम् । आद्यपतनं सासमवायिकारणकम्, कर्मत्वात्, बाणादिकर्मवत् । इत्यनुमानेन तत्सिद्धिः ॥ यद्यपि जडतमा अनुमानबहिर्मुखा अप्येतद्विदुरत एव केचनैतदतीन्द्रियन्नाङ्गीकुर्वन्ति तथापि दंडो-द्यमननेत्ररक्तत्वादिना बालाः परकोपमिव बहुतमाभ्यासवशाज्जडा अप्यूहन्ते, नैतावतातीन्द्रियत्वं हीयते, व्याप्तिग्रहादिकं च सदपि अभ्यासपाटवजनितशैघ्र्यान्न बुध्यते ॥ आद्यस्यंदनासमवायिकारण-वृत्तिगुणत्वव्याप्यजातिमत् द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विधा-सांसिद्धिकं नैमित्तिकं च। आद्यं जले, करकापि सांसिद्धिकद्रवत्ववतो जलस्य शैत्येन तत्प्रतिबंधमात्रात्पश्चाद्द्रवति। द्वितीयं पृथिवीतेजसोः। तत्र पृथिव्यां घृतादौ, तेजसि सुवर्णादौ, अग्निसंयोगजन्द्रवत्वम्। सांसि-द्धिकम्परमाणौ नित्यमन्यत्रानित्यम् । नैमित्तिकन्त्वनित्यमेव। द्रवत्वं स्यन्दने निमित्तकारणम्। चूर्णादिपिण्डीभावे तु स्नेहसहितन्निमित्तमिति न द्रुतसुवर्णपारदादिना पिण्डीभावः ॥ सांसिद्धिकद्रवत्वाभिन्नत्वे सति चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । स च जलमात्रवृत्तिः । यदि तु पिण्डीभावे विजातीयन्द्रवत्वमेव मुख्यो हेतुः, स्नेहस्तु न तथा नापि स्नेहो जलमात्रवृत्तिः किन्तु पृथिवीवृत्तिरपि । एवं च तैला-

दावपि जलस्यैव स्नेहः । स्नेहप्रकर्षाच्च वह्नेरानुकूल्यमित्याद्यपि न कल्प्यम् । न्यूनजलभागके घृतादौ स्नेहप्रकर्षानौचित्यापातात् विजातीयग्रहणात्पारदादिगतव्युदासः । वैजात्यं चानाकरजगतत्वम् । इत्युद्भाव्यते तदा स्पर्शभिन्नत्वे सति त्वङ्मात्रग्राह्यो गुणस्स्नेह इति लक्षणं प्रणेयम् । स च परमाणौ नित्योऽन्यत्राऽनित्यः । चक्षुरग्राह्यश्च, श्रोत्रग्राह्यगुणत्वव्याप्यजातिमान् शब्दः । आकाशमात्रवृत्तिः । वेदान्तिसाङ्ख्यौ तु पृथिव्यादिपञ्चसु शब्दमिच्छतः । स द्विधा-ध्वन्यात्मको वर्णात्मकश्च । आद्यो भेर्यादौ, द्वितीयः संस्कृतभाषारूपः । पुनः शब्दस्त्रिविधः—भेरीदंडसंयोगादौ संयोगजः, वंशदलद्वयविभागादौ विभागजः, द्वितीयशब्दात् चरमशब्दपर्यन्तं शब्दजः । सर्वत्राकाशः समवायी, संयोगो विभागः शब्दो वा असमवायी, शेषन्निमित्तम् । भेर्याद्यवच्छेदेनोत्पन्नशब्दादनन्तरं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वोत्तरोत्तरदेशे उत्पन्नशब्दानां मध्ये श्रोत्रदेश उत्पन्नशब्दस्य श्रोत्रेण ग्रहः । शब्दनाशश्चोत्तरोत्तरशब्देन योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्, अन्त्यस्तूपान्त्यशब्दध्वंसेन । जैमिनीयादयस्तु सोयं ग इति प्रत्यभिज्ञाबलाच्छब्दन्नित्यमाहुः ॥ उत्पन्नो गो विनष्टो ग इति निर्बाधप्रत्ययात्सोयं ग इति प्रत्ययस्य साजात्यावगाहित्वादनित्यत्वमेव नैयायिकाः ॥ वर्णोत्पत्तिक्रमस्तु "विवक्ष्वात्मेरितस्वान्ताहताग्निचलितो मरुत् ॥ व्यनक्ति यां मूलदेशे सा वाणी कथ्यते परा ॥ १ ॥ नाभौ व्यनक्ति पश्यन्तीम्मध्यमां हृदये

व्रजन्॥मूर्द्ध्यांघातान्मुखम्प्राप्तः स्पष्टवर्णां स वैखरीम्॥ २॥इति रीत्या-ज्ञेयः।वैयाकरणास्तु प्रत्येकवर्णादर्थप्रत्ययाभावः युगपन्मेलस्याप्यसम्भवोऽतस्तैर्वर्णैर्व्यङ्ग्यः स्फोटाख्यः शब्दो व्यज्यते स नित्य इत्याहुः॥ केचित्तु शब्दाघातेन गृहादिकम्पदर्शनाच्छब्दं द्रव्यमाहुः ॥ जानामीत्यनुव्यवसायवृत्तिगुणत्वव्याप्यजातिमती बुद्धिः । सैव ज्ञानम् । एतस्याः प्रपञ्चोऽग्रे वक्ष्यते ॥ सर्वेषामनुकूलतया वेदनीयं सुखम्, इष्टसाधनताज्ञानाजन्यजन्येच्छाविषयगुणो वा । जीवमात्रवृत्ति । अनित्यं च । तत्र जीवः समवायी, जीवमनःसंयोगोऽसमवायी,धर्मादि निमित्तम् । तच्च मानसप्रत्यक्षविषयः । सुखं चतुर्विधम्--विषयसाक्षात्कारजं वैषयिकम्, राज्यादिगर्वजमाभिमानिकम्, विषयादिध्यानजं मनोरथिकम्, उपायादिजमाभ्यासिकम् । नव्यास्तु ईश्वरे नित्यं सुखमस्तीत्याहुः ॥ सर्वेषाम्प्रतिकूलतया वेदनीयं दुःखम् । द्विष्टसाधनताविषयकजन्यज्ञानाजन्यद्वेषविषयगुणः दुःखम्, जीववृत्तित्वादि सुखवत् ॥ इच्छामीत्यऽनुभवविषयवृत्तिगुणत्वव्याप्यजातिमती इच्छा । आत्मवृत्तिः । ईश्वरेच्छा नित्या सर्वविषयका च । जीवेच्छा अनित्या यत्किञ्चिद्विषया च । समवाय्यसमवायिकारणे सुखवत् । इष्टसाधनताज्ञानं निमित्तम् । सा च द्विधा--फलेच्छा उपायेच्छा च।फलं सुखन्दुःखाभावश्च । उत्कटेच्छा रागः प्रवृत्तिहेतुरिच्छा चिकीर्षा।तत्र कृतिसाध्यताज्ञानम्,इष्टसाधनताज्ञानम्, बलवद्द्विष्टसाधनताज्ञानाभावश्चेति कारणानि॥द्वेष्मीत्यनुभवावि-

षयवृत्तिगुणत्वव्याप्यजातिमान् द्वेषः । जीववृत्तिरनित्यश्च । दुःखसाधनताज्ञानादि निमित्तम्, शेषकारणे सुखवत् । तच्च द्विधा—दुःखद्वेषः दुःखोपायद्वेषश्च । द्विष्टार्थसाधनीभूतचेतनविषयकद्वेषः क्रोधः ॥ करोमीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमान् प्रयत्नः । आत्मवृत्तिः स एव कृतिरुच्यते, नित्यत्वादिकमिच्छावत् । जीवप्रयत्नस्त्रिधा-प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्च । रागजन्यो गुणः प्रवृत्तिः । द्वेषजन्यो द्वेषाविषयकगुणः निवृत्तिः । जीवनादृष्टजन्यो गुणः जीवनयोनिः । स च । शरीरे प्राणसंचारे हेतुः, अतीन्द्रियश्च । तत्र मानन्तु प्राणसंचारः प्रयत्नसाध्यः प्राणसंचारत्वात्; धावतः पुरुषस्य प्राणसंचारवत् ॥ इत्यनुमानम् । नव्यास्तु जीवनयोन्याख्यं यत्नं नांगीकुर्वन्ति, अदृष्टविशेषोपगृहीतप्राणक्रियैव गतार्थत्वात् । चिकीर्षा, कृतिसाध्यताज्ञानम्, इष्टसाधनताज्ञानम्, उपादानप्रत्यक्षश्चेति प्रवृत्तिकारणानि ॥ बलवदनिष्टाजनकताज्ञानमपि केचिदाहुः, विस्तरोऽन्यत्र ज्ञेयः ॥ सुखविशेषजनकीभूतकर्मविषयकः प्रयत्न उत्साहः । आलस्यं कृत्यभावेन्तर्भवति ॥ सुखासाधारणकारणं धर्मः । यागजन्यस्वर्गजनकवृत्तिगुणत्वव्याप्यजातिमान् वा । जीववृत्तिः, अनित्यः अतीन्द्रियश्च । तस्य यागादिनिमित्तं, शेषकारणे सुखवत् । स च यागादीनां व्यापाररूपः, विनाशिनो यागादेः फलपर्यन्तमस्थायित्वात् । भोगादिना धर्मस्य नाशः ॥ दुःखासाधारणकारणमधर्मः । निषिद्धकर्मजन्यनरकजनकवृत्तिगुणत्वव्याप्यजातिमान् वा । जीववृत्तित्वादिकं धर्मवत् । निषिद्ध-

कर्मानुष्ठानादि निमित्तकारणम् । तस्य प्रायश्चित्तादिना नाशः । धर्माधर्मयोर्मानन्तु—देवदत्तस्य शरीरादिकं देवदत्तस्य विशेषगुणजन्यम्, कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात्, देवदत्तप्रयत्नजन्यकुसुमपर्यङ्कादिवत् । उभौ वासनाख्यवक्ष्यमाणसंस्कारजन्यौ, ज्ञानेनापि नाश्यौ च । एतावेवादृष्टाख्यौ । आत्मविशेषगुणवृत्तिमूर्त्तवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः । मूर्त्तेष्वात्मनि च वर्त्तते । स त्रिधा—वेगः स्थितिस्थापको भावना च । तत्र वेगो मूर्त्तेषु । स्थितिस्थापको भूमौ । भूम्यादिचतुर्ष्विति केचित् । भावना जीवे तिष्ठति । तत्र मनोवृत्तिवृत्तिसंस्कारत्वव्याप्यजातिमान् वेगः । स द्विधा—कर्मजो वेगजश्च । आद्यो नोदनोत्पादककर्मजः शरादौ । द्वितीयो वेगवत्कपालजन्यो घटे । जन्यमूर्त्तेषु उभयविधः । परमाणुमनसोस्तु कर्मज एव । उभयविधोऽप्यनित्यः, चक्षुस्त्वग्ग्राह्यश्च, पृथिवीवृत्तिवृत्तिमनोवृत्त्यवृत्तिसंस्कारत्वव्याप्यजातिमान् स्थितिस्थापकः । स चाकृष्टशाखादेर्यथापूर्वसंयोगजनकः । आकृष्टशाखादौ वेगस्तु उत्तरसंयोगमात्रजनको न तु यथापूर्वसंयोगजनकः । अयं चातीन्द्रियः । येऽप्येन भूमिमात्रवर्त्तिनमाहुस्तेऽपि न सर्वत्र भूमौ किन्तु शाखाधनुःकटादिरूपायामेव च । ये च भूम्यादिचतुर्ष्वाहुस्तेषाम्मते परमाणुषु नित्यः, अन्यत्रानित्यः ॥ अनुभवजन्या स्मृतिहेतुः भावना । अत्रानुभवश्च उपेक्षानात्मको निश्चयः स्मृतिप्रत्यभिज्ञयोरुत्पत्तयेऽनुभवस्य व्यापाररूपत्वेनैषा कल्प्यते । अनुभवस्य क्षणिकत्वात् । तत्र मानन्तु चैत्रशरीरादिकं चैत्रविशेषगुणजन्यं, कार्यत्वे सति तद्भोगहेतुत्वात्,

तत्प्रयत्नजन्यशय्यादिवत् इत्यनुमानम् । भावनैव वासनेति व्यव ह्रियते ॥ उपेक्षाभिन्नो विशिष्टाऽनुभवो भावनाजनकः सदृशादृष्ट-चिन्तासाहचर्यैरुद्बुद्धः संस्कारः।स्मृतिहेतुः । कालो रोगश्च संस्कार-नाशकः । सा वासना जीववृत्तिरनित्या अतीन्द्रिया च । तत्कारणद्वयं सुखवत् । पूर्वानुभवादि निमित्तम् । स्मृतिश्च पूर्वभावनां विनाश्य द्वितीयां भावनामुत्पादयति सा च पुनः स्मृतिमित्यादि ॥ इति न्यायप्रदीपे गुणनिरूपणन्तृतीयः परिच्छेदः ॥ ३ ॥

संयोगविभागासमवायिकारणं कर्म, संयोगभिन्नत्वे सति संयोगा-समवायिकारणं वा । मूर्त्तवृत्ति । तच्च उत्क्षेपणापक्षेपणाकुञ्चनप्र-सारणगमनभेदात् पञ्चधा । तत्र ऊर्ध्वदेशसंयोगास-मवायिकारणं कर्म उत्क्षेपणम्, अधःसंयोगासमवायिकारणं कर्म, अपक्षेपणम्,अभिमुखदेशसंयोगासमवायिकारणं कर्म्म आकुञ्चनम्, तिर्यक्संयोगासमवायिकारणं कर्म प्रसारणम् । अनियतोत्तर-देशसंयोगासमवायिकारणं कर्म गमनम् ॥ कर्मत्वजातिः प्रत्यक्ष-सिद्धा । कर्मविभाजकान्युत्क्षेपणत्वादीनि जातयः । भ्रमणरेचन-स्यन्दनोर्ध्वज्वलनतिर्यग्गमनादिकं गमनेन्तर्भवति । न चोत्क्षेपणा-दिकमपि गमनेनैव कुतो न गृहीतमिति वाच्यम् । स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वात् । कर्माण्यनित्यान्येव । प्रत्यक्षवृत्तीनि प्रत्यक्षाणि । अतीन्द्रियवृत्तीन्यतीन्द्रियाणि । संयोगेन नोदना-ख्येनाद्यं कर्म जन्यते, द्वितीयादि वेगजन्यम् । प्रथमं क्रियाक्रियातो विभागः,विभागात्पूर्वदेशसंयोगनाशः । तत उत्तरदेशसंयोगोत्पत्तिः ।

ततः कर्मविभागयोर्नाशः। सर्वत्र कर्मणि मूर्त्तद्रव्यं समवायि। असमवायि तु क्वचिन्मूर्त्तयोरभिघाताख्यो नोदनाख्यो वा संयोगः, क्वापि मूर्त्तस्यामूर्त्तसंयोगः। यथा—शरीरेण प्रयत्नवदात्मसँय्योगः, शरीरकर्म्मणि क्वापि गुरुत्वम्। एवं यथास्थलं द्रवत्ववेगावपि। आश्रयनाशादुत्तरसंयोगाद्वेगाद्वा कर्मनाशः। तच्च चक्षुस्त्वग्ग्राह्यम्, इति कर्म।

नित्यत्वे सत्यनेकसमवेतं सामान्यं, निःसामान्यत्वे सति विशेषान्यत्वे च सति समवेतं वा। द्रव्यगुणकर्मसु सदाकारा प्रतीतिरनुगतमेकं धर्मं विनानुपन्ना, तं धर्मं सत्ताख्यं कल्पयति। एवं द्रव्यत्वादिकमप्यूह्यम्। स एव धर्मः सामान्यं जातिश्चोच्यते। तच्च द्विधा—परमपरं च। अधिकदेशवृत्तित्वं परसामान्यत्वम्। अल्पदेशवृत्तित्वम् अपरसामान्यत्वम्। तत्र परं व्यापकमपरं व्याप्यम्। परापरं व्यापकव्याप्यम्। तथा च सत्तापरमेव सामान्यम्। घटत्वादिकमपरमेव। द्रव्यत्वादिकन्तु परापरम्। व्याप्यव्यापकभावश्चैकाधिकरणवृत्तिजातीनामेव। यथा—घटे घटत्वपृथिवीत्वद्रव्यत्वसत्तानाम्। न तु भिन्नाधिकरणवृत्तीनां द्रव्यत्वगुणत्वादीनाम्। सामान्यं प्रत्यक्षवृत्ति प्रत्यक्षमन्यत्राप्रत्यक्षम्। नन्वनुगतप्रतीत्या जातिकल्पने भूतत्वमूर्त्तत्वादीनामपि जातित्वं स्यात्, इति चेत्। तत्र सङ्करादेर्जातित्वबाधकत्वात् जातिबाधकानि च-"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः॥ रूपहानिरसंबंधो जातिबाधकसंग्रहः॥" तत्र स्वाश्रयनिष्ठस्वाश्रयप्रतियोगिकभे-

दाभावः, व्यक्त्यभेदः । स आकाशत्वकालत्वदिक्त्वानां जातित्वे बाधकः॥स्वभिन्नजातिसमनियतत्वं तुल्यत्वम्॥ घटत्वकलशत्वादेर्भिन्नजातित्वे परस्परात्यंताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः संकरः । भूतत्वमूर्त्तत्वादेर्जातित्वे, आकाशे मूर्त्तत्वात्यन्ताभावसमानाधिकरणम्भूतत्वम्, मनसि च भूतत्वात्यन्ताभावसमानाधिकरणम्मूर्त्तत्वम्, तयोः पृथिव्यादिचतुष्टये समावेशात॥ नवीनास्तु संकरस्य जातिबाधकत्वं नाङ्गीचक्रुः । अनवस्थितिरनवस्था च सामान्यत्वादेर्जातित्वे,रूपस्य लक्षणस्य निस्सामान्यत्वे सतीत्यादेः स्वतो व्यावर्त्तकत्वस्य स्वरूपस्य वा हानिर्विशेषत्वस्य जातित्वे, प्रतियोगितान्यतरसंबन्धेन समवायाभावः असम्बन्धः, समवायत्वाभावत्वादेर्जातित्वे, यथा पृथिव्यादौ गुणकर्मणोः समवायेन वृत्तिस्तत्र गुणकर्मणी समवायस्य प्रतियोगिनी, पृथिव्यादिरनुयोगी । तथा च समवायप्रतियोगितया गुणकर्मणोः अनुयोगितया च पृथिव्यादौ तिष्ठति । एवं समवायाभावौ तु क्वापि समवायेन न निष्ठतो नापि तत्र कश्चित्पदार्थः समवायेन तिष्ठत्यतः समवायस्य तौ प्रतियोगिनावनुयोगिनौ वा न स्तः । इति प्रतियोगितानुयोगितान्यतरेण समवायाभावाख्योऽसम्बन्धस्समवायत्वाभावत्वयोर्जातित्वे बाधकः । अत आकाशत्वादिकमुपाधिरेव । स द्विधा सखण्डोखण्डश्च । बहुपदार्थघटितो धर्मः सखण्डोपाधिः।यथा—आकाशत्वं शब्दसमवायिकारणत्वमिति बहुपदार्थघटितम् । अनिर्वचनीयो धर्मः अखण्डोपाधिः । यथा—प्रतियोगित्वानुयोगित्वादि । जात्युपाधि-

परिभाषा वैशेषिकमत एव अन्यत्र धर्म्ममात्रम् ॥ नव्यास्तु सदाकारानुगतप्रतीतेस्सत्ता न विषयः । किन्तु भावत्वमेव; अत एव सामान्यं सदिति प्रतीतिरित्याहुः । बौद्धास्तु अयं घटोयंघट इत्यनुगतप्रतीतिर्न घटत्वरूपां जातिं विषयीकरोति किन्त्वतद्व्यावृत्तिम् । सा च घटभिन्नानां पटादीनां घटनिष्ठो भेदः । स चाभावरूपस्तुच्छो नातिरिक्त इत्याहुः ॥

इति सामान्यम् ।

निःसामान्यत्वे सत्येकमात्रसमवेतः विशेषः,जन्यवृत्त्यवृत्तिपदार्थविभाजकोपाधिमान् वा । घटादिद्व्यणुकान्तानां तत्तदवयवभेदात् परस्परं भेदः । सजातीयपरमाणूनाम् आकाशादीनाञ्च परस्परम्भेदको विशेष एवाङ्गीकार्यः। स तु स्वत एव व्यावृत्तस्तत्र विशेषांतरापेक्षानास्ति । अयं परमाणुः एतत्परमाणोर्भिन्नः, एतद्विशेषात् । एवं विशेषो द्रव्यादिपदार्थाद्विशेषान्तराच्च स्वस्यापि स्वत एव व्यावर्त्तकः । विशेषः द्रव्यादिभिन्नः, विशेषात् । एतद्विशेषः तद्विशेषाद्भिद्यते, एतद्विशेषात् । स चानन्तो नित्यद्रव्येषु समवायेन तिष्ठति। नित्यः अतीन्द्रियश्च । तत्सिद्धिश्च परमाणुभेदः । किञ्चिल्लिङ्गज्ञाप्यः, भेदत्वात्, कपालभेदज्ञाप्यघटभेदवत् इत्यनुमानम् ॥ आकाशनिष्ठा या शब्दसमवायिकारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, दण्डनिष्ठकारणतावत् इत्यनुमानाद्वा । नित्यद्रव्याणामेव स्वतो व्यावर्त्तकत्वाङ्गीकारेण विशेषपदार्थोन्यदर्शनकारैर्नाङ्गीकृतः । अत एव एतदङ्गीकर्त्तॄणां वैशेषिकसञ्ज्ञा ॥

इति विशेषः ।

नित्यः सम्बन्धः समवायः, न चात्यन्ताभावस्स्वरूपसंबन्धेन भूतलादौ तिष्ठति नित्यश्च स्वरूपसम्बन्धश्चात्यन्ताभावरूप इति तत्रातिव्याप्तिरिति वाच्यम्, मुख्यसम्बन्धस्यैव ग्रहणात्। सम्बन्धिभिन्नत्वे सति सम्बन्ध्याश्रितः सम्बन्धः इति तल्लक्षणात् । तादृशसम्बन्धश्च संयोगः समवायो वा । अन्ये तु कालिकदैशिकविशेषणताविशेष्यताप्रतियोगितानुयोगिताधारताधेयताविषयतादयः स्वरूपसम्बन्धाः सम्बन्धिभ्यो भिन्ना न भवन्ति । केचित्सम्बन्धाः प्रतियोगिरूपाः, केऽप्यनुयोगिरूपाः । तत्र सम्बन्धशब्दो गौणः। यस्य वस्तुनो यस्मिन्नधिकरणे सम्बन्धः, तद्वस्तु तस्य सम्बन्धस्य प्रतियोगि, अधिकरणञ्चानुयोगि । एवञ्च घटात्यन्ताभावः विशेषणताख्यस्वरूपसम्बन्धेन भूतले तिष्ठतीति तस्य सम्बन्धस्य भूतलमनुयोगि, अत्यन्ताभावः प्रतियोगी, सम्बन्धोऽप्यत्यन्ताभावरूप एवेति नातिव्याप्तिः । अयुतसिद्धयोः सम्बन्धः समवायः । ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। तौ अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, नित्यद्रव्यविशेषौ चेति। समवायश्च विशेषणताख्यस्वरूपसम्बन्धेन द्रव्यादिपञ्चसु तिष्ठति एकश्च, प्राचाम्मते समवायस्यैकत्वेऽपि रूपाभाववायौ रूपवत्ताबुद्धिः। स च नित्यः। तत्र इह कपाले घटसमवाय इति प्रत्यक्षम्प्रमाणम्ग्राह्यञ्च आहुः ॥ नव्यास्तु स न प्रत्यक्षः किन्त्वनुमेयः । तथाहि विशिष्टज्ञाने प्रकारविशेष्यसंसर्गा अवश्यं भवन्ति । प्रकारत्वम्भासमानवैशिष्ट्यप्रतियोगित्वम्, विशेष्यत्वन्तदनुयोगि-

त्वमेते विषयताविशेषौ वैशिष्ट्यञ्च सम्बन्धः। प्रकारो विशेषणमिति पर्य्यायौ।एवञ्च रूपी घट इति विशिष्टबुद्धिः, विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात्, दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानम् समवाये प्रमाणाम् इत्याहुः । तत्र द्रव्ययोरेव संयोग इति नियमेन संयोगबाधात् समवायसिद्धिः ॥ मीमांसकास्तु अयुतसिद्धयोरपि स्वरूपसम्बन्धमेवाङ्गीचक्रुः । अविशिष्टव्यावृत्तविशिष्टधीनियामको वृत्तिनियामकः सम्बन्धः, यथा घटवद्भूतलमित्यादौ घटभूतलयोः संयोगः । वृत्तिनियामकसम्बन्धाश्च--संयोगसमवायस्वरूपकालिकदैशिकविशेषणतादयः,एतदतिरिक्तास्तु वृत्त्यनियामका बोध्याः।ते च गगनादिसंयोगाङ्गुलिद्वयसंयोगविषयत्वविषयित्वानुयोगित्वप्रतियोगित्वनिरूपकत्वनिरूप्यत्वतादात्म्यादयोऽनन्ता एव ।स्वरूपसंबन्धः सम्बन्धान्तरेण विशिष्टप्रतीतिजननायोग्यत्वम्, यथा-भूतले घटो नास्तीत्यादौ घटाभावादेर्भूतलेन सम्बन्धः । स द्विविधः-केवलरूपः विशेषणता चेति । तत्राद्यो भावाभावान्यतरप्रतियोगिकः।द्वितीयस्त्रिविधः-दैशिकविशेषणता,दिक्कृतविशेषणता कालिकविशेषणता चेति।तत्राद्यश्चाभावमात्रप्रतियोगिकः। द्वितीयतृतीयौ तु दिक्कालानुयोगिकौ जन्यमात्रप्रतियोगिकौ च, इमावेव सर्वाधारताप्रयोजकसम्बन्धौ गीयेते ॥

इति समवायः ।

---

निषेधमुखप्रतीतिविषयः अभावः । सम्बन्धसादृश्यादिभिन्नत्वे सति प्रतियोगिज्ञानाधीनज्ञानविषयो वा । अभावत्वमखण्डोपाधिरिति केचित् । एवं ध्वंसत्वादिकमपि । अभावो द्विधा—संसर्गाभावः

अन्योन्याभावश्च । संसर्गाभावस्त्रिधा—प्रागभावः, प्रध्वंसाभावः,अत्यन्ताभावः । प्राचाम्मते सामयिकाभावश्चतुर्थोऽपि । अन्योन्याभाव एकविध एव । अन्योन्याभावभिन्नोऽभावः संसर्गाभावः । विनाश्यभावः प्रागभावः, प्रतियोगिजनकाभावो वा । स्वप्रतियोगिसमवायिकारणवृत्तिः, कारणसामग्रीसमवधानम्प्रागभावनाशहेतुः । कार्योत्पत्तिसमय एव प्रागभावनाशः । सामग्रीसत्त्वे उत्पन्नस्य पुनरुत्पत्तिभयात्प्रागभावांगीकारः । इह कपाले घटो भविष्यतीति प्रतीतिरपि मानम् । नव्यास्तु घटो भविष्यतीति प्रतीतिर्न प्रागभावं विषयीकरोत्यपि तु घटस्योत्तरकालवृत्तित्वम् । नाप्युत्पन्नस्य पुनरुत्पत्तिः शंङ्कया, अवयवेषु समवायेन वर्त्तमानो घटो घटान्तरोत्पत्तिप्रतिबन्धक इत्यंगीकारात् इत्याहुः ॥ उत्पत्तिमान् अभावः प्रध्वंसाभावः । उत्पत्तिमान् अनन्तश्च । प्रध्वंसाभावे मानन्तु घटादिनाशानन्तरं कपालादौ इह घटो ध्वस्त इति प्रतीतिरेव।ननु प्रागभावस्यानादित्वम्, ध्वंसस्य चानन्तत्वन्न स्वीक्रियेत चेत्को दोष इति चेत्, तर्हि प्रागभावस्य प्रागभावान्तरं ध्वंसस्य च ध्वंसान्तरमङ्गीकार्यं स्यात्।तथा च प्रागभावप्रागभावकाले ध्वंसध्वंसकाले च प्रतियोग्युन्मज्जनापत्तिः स्यात् । ध्वंसप्रागभावानधिकरणकालस्य प्रतियोग्यधिकरणत्वनियमात् ॥ नित्यः संसर्गाभावोऽत्यन्तभावः । यथा—वायौ रूपाभावः, स च नित्यः प्रतियोगिप्रागभावध्वंसाधिकरणे न तिष्ठति, श्यामघटे रक्तो नास्ति रक्ते श्यामो नास्तीति प्रतीतिः प्रागभावं ध्वंसं चावगाहते न

तु तदत्यन्ताभावं, तेन सह तयोर्विरोधात् । नव्यास्तु विरोधे माना-
भावात्तत्रात्यन्ताभावोऽस्तीत्याहुः ॥ उत्पत्तिविनाशवानभावः साम-
यिकाभावः । यथा—भूतले घटाद्यभावः, स च मूर्त्तानामेव भवति ।
नव्यास्तु तत्राप्यत्यन्ताभाव एवास्तीति सामयिकाभावो नाङ्गी-
कार्यः । यत्र घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य
संबन्धाघटकत्वान्न तदत्यन्ताभावबुद्धिः । तत्तत्कालीनन्तत्तद्भूतला-
दिकमेव तत्तदभावानां सम्बन्धः ॥ तादात्म्यसम्बन्धावच्छिन्नप्रति-
योगिताकोऽभावः अन्योन्याभावः । अयमेव भेद उच्यते। यथा—
घटः पटो न, स च नित्यः ॥ अत्यन्ताभावान्योन्याभावौ विशेषा-
भावसामान्याभावभेदात्प्रत्येकन्द्विविधौ।तत्र भूतले सत्यपि पीतघटे
नीलघटो नास्तीति विशेषात्यन्ताभावः।पीतघटो नीलघटो नेति
विशेषान्योन्याभावः । घटशून्यदेशे च भूतले घटो नास्तीति
सामान्यात्यन्ताभावः।भूतलं घटोनेति सामान्यान्योन्याभावः।
सामान्याभावविशेषाभावौ च मिथो भिन्नावेव, अन्यथा पीतघटवति
भूतले घटो नास्तीति प्रतीत्यापत्तिः । उक्तौ अभावौ व्यासज्यवृ-
त्तिधर्मावच्छिन्नप्रतियोगिताकत्वतदन्यभेदात्प्रत्येकन्द्विविधौ । आद्यः
भूतले घटपटौ न इत्यत्र अत्यन्ताभावः । घटो न
घटपटौ इत्यत्रान्योन्याभावश्च, द्वित्वधर्मावच्छिन्नप्रतियोगिताकः,
अयमेवोभयाभावः उच्यते । अन्त्यः भूतले घटो नास्ति
भूतलन्न घटः इति घटत्वावच्छिन्नप्रतियोगिताकः । एवम्प्र-
तियोगितावच्छेदकारोप्यसंसर्गभेदादेकप्रतियोगिकयोरप्यत्यन्ताभावा-

न्योन्याभावयोर्बहुत्वम् । केवलदेवदत्ताभावाद्दण्डयभाव इति प्रतीत्या विशिष्टाभावोऽतिरिक्तः । एवम् एकसत्त्वेपि द्वौ न स्त इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगेन घटवति समवायेन घटाभावः, सम्बन्धावच्छिन्नाभावः, घटत्वेन पटो नास्तीति व्यधिकरणधर्मावच्छिन्नाभावः ॥ अभावोधिकरणात्मक इति मीमांसकास्तन्न जले गन्धाभावस्य जलरूपतया प्रत्यक्षानुपपत्तेः, घ्राणस्य जलाग्राहकत्वात् । यदि तु तत्र इन्द्रियान्तरेणाधिकरणत्वाभिमते ज्ञाते गन्धादिप्रत्यक्षानुत्पत्तिरेव भवति न त्वाधेयत्वाभिमतगन्धाभावादिविषयकम्भिन्नञ्ज्ञानम्, इत्यनुभवान्नाभावस्यातिरिक्तत्वम्, शब्दप्रयोगमात्रकल्पिताधेयत्वादिमात्रेण पदार्थान्तरकल्पनाया अन्याय्यत्वात्, यथा साधर्म्यवैधर्म्यनिरूपणादौ पदार्थविभाजकसामान्यत्वादिभिर्व्यवहरन्त आधाराधेयभावादि कल्पयन्तश्च तार्किका अपि तेषामतिरिक्तत्वन्नाङ्गीकुर्वन्ति, तथा अभावोप्यतिरिक्तो नाङ्गीकार्यः, वैशेषिकसूत्रेष्वप्यभावगणना नास्तीति उद्भाव्यते तर्हि समाधानान्तरमन्वेष्यम् । अभावाभावो भाव एव, ध्वंसप्रागभावस्तद्ध्वंसश्च प्रतियोग्येवेति प्राञ्चः । अभावाभावोऽतिरिक्तः, तदभावश्च प्रथमाभावरूप इति तु नव्याः । इति सर्वेऽपि पदार्था व्याख्याताः । अन्येषाम्मतान्तरप्रसिद्धानामप्येतेष्वेवान्तर्भावात् । तुतातभट्टमतानुयायिनस्तौतातिकास्तु द्रव्यादयश्चत्वार एव पदार्था इत्याहुः । गुरवस्तु संख्यासमवायसादृश्यशक्तयो द्रव्यादिचतुष्कञ्च इत्यष्टावाहुः ॥ वह्न्यादिसत्त्वेपि मण्यादिना दाहप्रतिबन्धादुत्तेजके

मण्यपसारणे वा दाहोत्पादात्तदनुकूलां वह्न्यादौ शक्तिं कल्पयन्ति उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्यापि कार्यम्प्रति हेतुत्वेन प्रतिबन्धकसमवधानस्थले कारणाभावादेव न कार्योत्पादस्तस्मादतिरिक्ता शक्तिर्न कल्प्या, कारणत्वस्यैव शक्तिपदार्थत्वात् । प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वमपि तु कारणीभूताभावप्रतियोगित्वम् । प्रतिबन्धककोटिप्रविष्टाभावप्रतियोगित्वमुत्तेजकत्वम् ॥ सादृश्यमपि न पदार्थान्तरम्, तच्च तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् ,तस्य च धर्मस्य द्रव्यादिष्वेवान्तर्भावात् ।एवं शुद्धिस्वत्ववैशिष्ट्यकारणत्वकार्यत्वादिकमपि नं पदार्थान्तरम् । विस्तरभयाच्च न प्रपञ्चः कृतः ॥ इति न्यायप्रदीपे कर्मसामान्यविशेषसमवायाभावनिरूपणं चतुर्थः परिच्छेदः ॥ ४ ॥

अथ साधर्म्यवैधर्म्यप्रक्रिया । तत्र समानो धर्मः साधर्म्यम्, विरुद्धो धर्मो वैधर्म्यम् । यद्येषां साधर्म्यं तत्तदन्येषां वैधर्म्यम् । सर्वेषाम्पदार्थानाञ्ज्ञेयत्वप्रमेयत्वाभिधेयत्वाऽस्तित्वानि,एतानि कस्यापि वैधर्म्याणि न सन्ति।द्रव्यादिषण्णाम्भावत्वं, तच्च समवायैकार्थसमवायान्यतरसम्बन्धेन सत्तावत्त्वम्, एतच्चाभावस्य वैधर्म्यमेवमग्रेपि वैधर्म्यं बोध्यम् । द्रव्यादिपञ्चानामनेकत्वविशिष्टभावत्वं समवायेन सम्बन्धित्वञ्च।द्रव्यादिचतुर्णां समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् । द्रव्यादित्रयाणां सत्तावत्त्वम्।गुणादिषण्णांनिर्गुणत्वन्निष्क्रियत्वञ्च,तच्च गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधित्वञ्च,सामान्यादिचतुर्णां सामान्यहीनत्वम् । गुणकर्मणोः असमवायित्वन्तच्च

असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वम्। द्रव्यगुणयोः नित्यानित्योभयवृत्तिसत्ताभिन्नजातिमत्त्वम् । नित्यद्रव्यभिन्नानामाश्रितत्वम् । तच्च समवायादिना वृत्तिमत्त्वम् ॥

## अथ द्रव्याणां साधर्म्यम् ॥

पृथिव्यादिनवानां द्रव्यत्वं, गुणवत्त्वं समवायिकारणत्वञ्च।नित्यद्रव्याणामवृत्तित्वम् । पृथिव्यादिचतुर्णाम्मनसश्च मूर्त्तत्वम्, तच्च परिच्छिन्नपरिमाणवत्त्वम्, क्रियावत्त्वं, वेगवत्त्वम्परत्ववत्त्वमपरत्ववत्त्वञ्च । खादिचतुर्णां विभुत्वम्, तच्च सर्वमूर्त्तद्रव्यसंयोगित्वम्परममहत्परिमाणवत्त्वञ्च । पृथिव्यादिपञ्चानाम्भूतत्वम्, तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । आत्मावृत्तिविशेषगुणवत्त्वं वा । पृथिव्यादिपञ्चानामात्मनाञ्च विशेषगुणवत्त्वम् । पृथिव्यादिचतुर्णां स्पर्शवत्त्वं द्रव्यसमवायिकारणत्वञ्च, तच्च द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम् । पृथिव्यादित्रयाणां रूपवत्त्वन्द्रवत्ववत्त्वं बहिरिन्द्रियजन्यप्रत्यक्षविषयद्रव्यत्वञ्च,पृथवीजलयोर्गुरुत्ववत्त्वं रसवत्त्वञ्च, पृथिवीतेजसोः नैमित्तकद्रवत्ववत्त्वम् । अकाशजीवयोः अव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्च । स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम्।तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वं क्षणिकत्वम् । योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिस्वसमानाधिकरणयोग्यविभुविशेषगुणनाश्यत्वात ॥

## अथ गुणानां साधर्म्यम् ।

सर्वेषां गुणानां द्रव्याश्रितत्वन्निर्गुणत्वन्निष्क्रियत्वं गुणत्वजातिमत्त्वञ्च। रूपादिचतुर्णाम्परत्वादिपञ्चानां वेगस्थितिस्थापकयोश्च मूर्तवृत्तिगुण-

त्वं, शब्दादिनवानां भावनायाश्च अमूर्तवृत्तिगुणत्वम् । संख्यादिपञ्चानाम्मूर्त्तामूर्त्तोभयवृत्तिगुणत्वम् । संयोगविभागद्वित्वादिसंख्याद्विपृथक्त्वादिपृथक्त्वानामनेकवृत्तिगुणत्वमन्येषामेकवृत्तिगुणत्वम् । रूपादिचतुर्णां सांसिद्धिकद्रवत्वस्य स्नेहादिदशानां भावनायाश्च विशेषगुणत्वम् । शेषाणां सामान्यगुणत्वम् । रूपादिचतुर्णां शब्दस्य च बाह्यैकैकेन्द्रियग्राह्यगुणत्वम् । संख्यादिसप्तानान्द्रवत्वस्नेहवेगानां च द्वीन्द्रियग्राह्यत्वम् । बुद्ध्यादिषण्णाम्मनोग्राह्यगुणत्वम् । अनुद्भूतानां रूपादिचतुर्णां गुरुत्वजीवनयोनियत्ननिर्विकल्पकप्रत्यक्षधर्माधर्मस्थितिस्थापकभावनानां च अतीन्द्रियत्वम् । अपाकजरूपादिचतुष्कमध्यमपरिमाणैकत्वैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहवेगस्थितिस्थापकानां कारणगुणोत्पन्नत्वम् । तच्च स्वाश्रयसमवायिमात्रसम्वेतस्वसजातीयगुणजन्यत्वम्, शब्दादिनवानाम्भावनायाश्चाऽकारणगुणोत्पन्नत्वम् । पाकजरूपादिचतुष्कनैमित्तिकद्रवत्वद्वित्वादिसंख्याद्विपृथक्त्वादिपृथक्त्वसंयोगादिचतुष्काणामनुभयगुणत्वम् । संयोगविभागवेगानांकर्मजत्वम् । रूपादिचतुष्कैकत्वपरिमाणैकपृथक्त्वसांसिद्धिकद्रवत्वस्नेहशब्दस्थितिस्थापकानामसमवायित्वम् । बुद्ध्यादीनामात्मविशेषगुणानां निमित्तकारणत्वम् । उष्णस्पर्शसंयोगविभागगुरुत्वद्रवत्ववेगानामुभयविधकारणत्वम् । संयोगविभागशब्दादीनामव्याप्यवृत्तिगुणत्वम् । बुद्धीच्छाप्रयत्नद्वेषभावनानां सविषयत्वम् । गन्धसंयोगादिचतुष्कशब्दसुखदुःखद्वेषधर्मादित्रयाणामनित्यत्वम्, शेषाणां नित्यानित्यवृत्तिगुणविभाजकोपाधिमत्त्वमिति ॥

इति न्यायप्रदीपे साधर्म्यवैधर्म्यनिरूपणं पञ्चमपरिच्छेदः ॥ ५ ॥

बुद्धिर्द्विधा-नित्याऽनित्या च। तत्र नित्या ईश्वरस्य, अनित्या जीवस्य। जीवबुद्धिरपि द्विधा—अनुभवः स्मृतिश्च। स्मृतिभिन्नज्ञानमनुभवः। स द्विधा-यथार्थोऽयथार्थश्च। तद्वति तत्प्रकारकानुभवः यथार्थानुभवः। तद्वद्विशेष्यकस्तत्प्रकारक इत्यर्थः । अयमेव प्रमोच्यते। यथा अयं घट इति अनुभवः घटत्ववद्धटविशेष्यको घटत्वप्रकारकश्च। तदभाववति तत्प्रकारकानुभवः अयथार्थानुभवः । यथा शुक्ताविदं रजतम् । यथार्थानुभवश्चतुर्विधः । प्रत्यक्षोपमित्युपमितिशाब्दभेदात्-प्रथमस्य प्रत्यक्षत्वकथनादनुमित्यादीनां परोक्षत्वमुक्तं भवति । न च पर्वतो वह्निमानित्यनुमितेः पर्वतांशे, उपमितेर्गवयाद्यंशे, दशमस्त्वमसीत्यादौ शाब्दस्य पुरुषांशे च सन्निकृष्टविषयेपि परोक्षत्वं स्यादिति वाच्यम् । इष्टापत्तेः । तत्र हि पर्वतादिप्रत्यक्षं चक्षुरादिजन्यमभिन्नमेव। अनुमित्यादौ तु पर्वताद्यंशेपि परोक्षत्वमेवेति ॥ प्रमाकरणम्प्रमाणम्, तदपि चतुर्विधम्—प्रत्यक्षानुमानोपमानशब्दभेदात् । व्यापारवदसाधारणं कारणं करणम् । यथा—घटस्य दण्डादि । अरण्यस्थदण्डेपि स्वरूपयोग्यत्वसत्त्वात्सामान्यघटकारणत्वनिर्वाहः । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः । यं जनयित्वैव यस्य यज्जनकत्वं स तस्य व्यापारः । यथा—दण्डादेर्भ्रमणादिः ॥ अनन्यथासिद्धकार्यनियतपूर्ववृत्ति कारणम् । अवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धम् । एतेनैव दण्डत्वदण्डरूपाकाशकुलालपितृरासभादीनां संग्रहाद् ग्रंथान्तरे

त्रैविध्यादिप्रतिपादनं शिष्यधीवैशद्यार्थम् । न च दण्डत्वादेःकारणत्वं दण्डादेश्चान्यथासिद्धत्वमस्तु लाघवेन दण्डादेरेवावश्यक्लृप्तत्वात् । लाघवं त्रिधा शरीरोपस्थितिसंबन्धकृतभेदात् । आद्यम्प्रत्यक्षेऽनेक-द्रव्यसमवेतत्वापेक्षया महत्वे, द्वितीयम्पाकजगन्धे, रूपप्रागभावापेक्षया गन्धप्रागभावे।तृतीयं घटे, दण्डत्वापेक्षया दण्डे। एवमेव गौरवमपि त्रि-विधम्, लाघवविपरीतञ्चोदाहरणम् इत्यलम्॥प्रागभावप्रतियोगिकार्यं कारणन्त्रिधा—समवाय्यसमवायिनिमित्तभेदात् । यत्समवेतं कार्यमु-त्पद्यते तत्समवायिकारणम् । यथा—तन्तवः पटस्य पटश्च स्वरू-पादेः । समवायस्वसमवायिसमवायान्यतरसम्बन्धेन समवायिकारणे प्रत्यासन्नत्वे सति ज्ञानादिभिन्नत्वे सति कारणमसमवायिकारणम् । यथा-तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य।विशेषलक्षणञ्च—पटसम-वायिकारणे समवायसम्बन्धेन प्रत्यासन्नत्वे सति तुरीतंतुसंयोगादि-भिन्नत्वे सति पटकारणं पटासमवायिकारणम् ॥ तदुभयभिन्नं कारण-न्निमित्तकारणम् । यथा—दण्डादि घटस्य । इदञ्च कारणत्रयम्भा-वकार्यस्यैव । अभावस्य निमित्तमात्रम् ॥ पुनः कारणन्द्विधा— । साधारणमसाधारणञ्च । कार्यत्वावच्छिन्नकार्यतानिरूपितकारणता-शालि साधारणकारणम् । यथा—कार्यमात्रे ईश्वरादयः । ते च-ईश्वरस्तज्ज्ञानेच्छाकृतयः अदृष्टप्रतिबन्धकाभावौ चेति । दिक्काल-प्रागभावा अपि । कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारण-ताशालि असाधारणकारणम् ॥ पुनरपि कारणन्द्विधा—फलोपधा-यकं स्वरूपयोग्यञ्च । अव्यवहितपूर्ववृत्तित्वसम्बन्धेन फलविशिष्ट-

माद्यम् । कारणतावच्छेदकधर्मवद्द्वितीयम् । प्रत्यक्षप्रमाकरणम्प्रत्यक्षप्रमाणम्, तच्चेन्द्रियमेव । तच्चान्तरम्बाह्यं चेति द्विधा--मन आन्तरम्, चक्षुरादि बाह्यम् । पुनरपि द्विधा । तत्र चक्षुस्त्वङ्मनोरूपं द्रव्यग्राहकं, घ्राणादि द्रव्याग्राहकम् ॥ इन्द्रियार्थसन्निकर्षजन्यज्ञानम्प्रत्यक्षम्, ईश्वरनिष्ठप्रत्यक्षस्याजन्यत्वात्तत्साधारणलक्षणन्तु ज्ञानाकरणकज्ञानत्वम् । प्रत्यक्षज्ञानमपि द्विधा—नित्यमनित्यं च । ईश्वरस्य नित्यं, जीवस्यानित्यम् । तदपि षड्विधम्--घ्राणजरासनचाक्षुषस्पार्शनश्रौत्रमानसभेदात् । पुनः प्रत्यक्षं द्विविधम्--निर्विकल्पकसविकल्पकभेदात् । प्रकारताद्यनिरूपकज्ञानं निर्विकल्पकम् । प्रकारतानिरूपकञ्ज्ञानं सविकल्पकम् । अयं घट इति विशिष्टज्ञानं विशेषणज्ञानपूर्वकम्, विशिष्टज्ञानत्वाद्दण्डीति ज्ञानवत्, इति निर्विकल्पे मानम् । तस्यापि सविकल्पकत्वेऽनवस्था । तच्च निर्विकल्पकन्न प्रत्यक्षम् । तथाहि—वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षन्न सम्भवति, घटमहं जानामीति प्रत्यये आत्मनि ज्ञानं प्रकारः, ज्ञाने घटः, घटे घटत्वम्, प्रकार एव विशेषणमुच्यते घटघटत्वे इति निर्विकल्पे घटत्वादिकं न प्रकारस्तेन तद्विशिष्टघटादिवैशिष्ट्यभानन्तत्र न सम्भवति । एकस्मिन्नेव घटे अयं घटः, इयं पृथवी, इदन्द्रव्यम् इति विलक्षणतायां घटत्वपृथिवीत्वद्रव्यत्वरूपविशेषणज्ञानानामेव कारणताऽतो विशिष्टज्ञाने विशेषणज्ञानस्य कारणता तदेव निर्विकल्पम् ॥ पुनः प्रत्यक्षं द्विधा--लौकिकमलौकिकं च । लौकिकसन्निकर्षजन्यं प्रत्यक्षं लौकिकम् । अलौकिकसन्निकर्षजन्यम्प्रत्यक्षम् अलौकिकम्

प्रत्यक्षहेतुरिन्द्रियार्थयोर्लौकिकसन्निकर्षः षड्विधः—संयोगः १, संयुक्तसमवायः २, संयुक्तसमवेतसमवायः ३, समवायः ४, समवेतसमवायः ५, विशेषणता च ६। तत्र द्रव्यग्रहे विषयेन्द्रिययोः संयोगः। द्रव्यसमवेत द्रव्यत्वगुणादेर्ग्रहे संयुक्तसमवायः। इन्द्रियसंयुक्ते द्रव्ये द्रव्यत्वादेः समवायात्। द्रव्यसमवेतसमवेतगुणत्वकर्मत्वादेर्ग्रहे संयुक्तसमवेतसमवायः। शब्दग्रहे समवायः। श्रोत्रस्याकाशरूपत्वात्, तत्र च शब्दस्य समवायात्। शब्दत्वादेर्ग्रहे समवेतसमवायः। समवायस्याभावस्य च ग्रहे विशेषणता, चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणतया वृत्तेः। एवञ्चक्षुःसंयुक्ते घटे रूपसमवायस्य विशेषणतया वृत्तिः। भूतले घटाभावः संयुक्तविशेषणतया, संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया, शब्दाभावः श्रोत्रावच्छिन्नविशेषणतया गृह्यते इत्याद्या विशेषणता नानाविधापि विशेषणतात्वेनैकविधैव गण्यते। नन्वेवं संयुक्तसमवायादिचतुष्कस्थानेपि समवाय एवोच्यताम्। इष्टत्वात्प्राचामनुरोधात्पृथगुक्तिः। केचित्तु दूरवृक्षादेर्ह्रस्वत्वप्रतीतेःपारिमाणग्रहे इन्द्रियावयव्यर्थावयविनोरिन्द्रियावयवार्थावयवयोरिन्द्रियावयव्यर्थावयवयोरिन्द्रियावयवार्थावयविनोश्च संयोग इति सन्निकर्षचतुष्टयमाधिकं कारणमाहुः। दूरत्वदोषादेव ह्रस्वत्वप्रतीतिरिति नव्याः। जीवात्मनो महत्त्वमेकत्वञ्च न प्रत्यक्षविषय इति केचित्, अस्तीत्येके। चाक्षुषप्रत्यक्षे चालोकसंयोगोपि हेतुः। चक्षुषस्तैजसत्वेन दीपप्रभाया इवातिशयवेगवशाद्वस्तुना संयोगस्ततः प्रत्यक्षम्।

शाखाचन्द्रयोरपि क्रमेणैव ग्रहः । युगपद्ग्रहस्तु भ्रम एव, स्वच्छ-द्रव्यस्य तेजोऽप्रतिबन्धकत्वादुपनेत्रादिव्यवधानेपि वस्तुग्रहः । उपनेत्रादिशक्तथा च वस्तुनो महत्त्वनिकटगत्वादिभानम्, दर्पणादौ मुखादिभानं च, दर्पणगतचक्षुषः परावृत्त्या स्वमुखस्यैव ग्रहात् । दर्पणगतत्वेन सम्मुखत्वेन सूक्ष्मत्वेन महत्त्वेन च दोषवशाद्भानम् । अभावप्रत्यक्षे च अत्र यदि प्रतियोगी स्यात् तदा उपलभ्येत इत्याकारकतर्कसहकृतप्रातियोग्युपलम्भाभावः योग्यानुपलब्धिः, सापि कारणम् । तत्सहकृतेनेन्द्रियेणैवाभा-वज्ञानोपपत्तौ भट्टाभिमतानुपलब्धेः करणत्वन्नापेक्षणीयम् । अधि-करणज्ञानार्थमिन्द्रियं त्वावश्यकमेव इति॥प्रत्यासत्तिसंज्ञोऽलौकिक-सन्निकर्षस्तु आद्यः सामान्यलक्षणः । स च इन्द्रियसंबद्धविशेष्य-कज्ञाने प्रकारीभूतः । अयं घट इत्यादिलौकिकप्रत्यक्षे घटत्वादिः, इदं रजतमित्यादावपीन्द्रियसंबद्धशुक्त्यादिविशेष्यके ज्ञाने रजतत्वा-दिः । तदनन्तरन्तेन सन्निकर्षेण सर्वघटविषयकं सर्वरजतविषयक-ञ्च प्रत्यक्षञ्जायते । द्वितीयश्च ज्ञानलक्षणः । स च सुरभिचन्दन-मित्यत्र सौरभांशे सौरभस्मरणरूपः, तत्र घ्राणसन्निकर्षाभावात् । यत्र युक्तयोगिनो योगजधर्मेण प्रथमप्रत्यासत्त्या युंजानस्य चि-न्ताविशेषसहकृतद्वितीयप्रत्यासत्त्याऽखिलपदार्थज्ञानं जायते, स शास्त्रप्रामाण्यांगीकार्यो योगजस्तृतीयोप्युच्यते ॥

इति प्रत्यक्षम् ।

---

अनुमितिकरणमनुमानम् । पर्वतो वह्निमानित्यनुमितौ धूमो व-ह्निव्याप्य इति व्याप्तिज्ञानं करणम् । तदेवानुमानम् । परामर्श-

जन्यञ्ज्ञानमनुमितिः। व्याप्तिविषयकपक्षधर्मताज्ञानं । परामर्शः । यथा--वह्निव्याप्यधूमवान्पर्वतः । व्याप्तिविशिष्टपक्षधर्मताविशिष्टहेतुः लिंगम् । यथा--धूमः अयमेव हेतुः साधनं चोच्यते । अत्रायं क्रमः--येन महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स क्वापि पर्वतादौ धूमं दृष्ट्वा धूमो वह्निव्याप्य इति व्याप्तिं स्मरति, ततो वह्निव्याप्यधूमवानयं पर्वत इति परामर्शाख्यञ्ज्ञानम्भवति । तदनन्तरम्पर्वतो वह्निमानित्यनुमितिरुत्पद्यते ॥ प्राचां लिङ्गपरामर्श एवानुमितिकरणम् ॥ नव्यानां व्याप्तिज्ञानं करणम्परामर्शो व्यापारः । हेतुसमानाधिकरणात्यंताभावाप्रतियोगिसाध्यसामानाधिकरण्यमन्वयव्याप्तिः । यथा—यत्र धूमस्तत्राग्निः ॥ साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तिः। यथा—यत्र वह्न्यभावस्तत्र धूमाभावः "व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते।तयोरभावयोस्तस्माद्विपरीतःप्रतीयते॥अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते।साध्याभावोन्यथाव्याप्यो व्यापकःसाधनात्ययः॥"।सन्दिग्धसाध्यवत्त्वं पक्षता अत्र मते पक्षे साध्यनिश्चयेऽनुमित्सासत्त्वेपि नानुमितिः।सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति मते तु सिद्धेः प्रतिबन्धकत्वेपि उत्तेजकसिषाधयिषासत्त्वात्तद्विरहविशिष्टसिध्यभावेन विशिष्टाभावात्तत्राप्यनुमितिर्भवत्येव । परन्तु पक्षतावच्छेदकसामामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेकावच्छेदेन सिद्धिरेव प्रतिबन्धिका पक्षतावच्छेदकसामानाधिकरण्येनानुमितिम्प्रति तु सिद्धिमात्रं विरोधि, पक्षताऽऽ

ञयः पक्षः। यथा—पर्वतः। निश्चितसाध्यवान् सपक्षः। यथा—महानसः। निश्चितसाध्याभाववान् विपक्षः। यथा—ह्रदः। यस्य महानसादौ बहुशः, यत्र धूमस्तत्र वह्निरिति साहचर्यदर्शनम्भवति तस्य धूमो वह्निव्याप्य इति व्याप्तिग्रहो भवति। साहचर्यदर्शनं च व्यभिचारज्ञानविरहसहकृतं बोध्यम्। तेन पार्थिवत्वलोहलेख्यत्वादौ न व्याप्तिग्रहः, वज्रे व्यभिचारात्। व्यभिचारज्ञानं द्विविधम्—निश्चयः शंका च। तदभावश्च क्वचिद्धूमाग्निव्याप्तिग्रहे कार्य्यकारणभावभंगप्रसंगरूपात्तर्कात्, क्वचित्स्वत एव। पर्वतादौ तु धूमत्ववह्नित्वरूपसामान्यलक्षणप्रत्यासत्त्या सकलधूमाग्निज्ञाने तद्व्याप्तिग्रहः॥अनुमानं द्विधा-स्वार्थं परार्थञ्च। तत्र न्यायाप्रयोज्यानुमानं स्वार्थानुमानम्। यथा—प्रागुक्तम्। परम्बोधयितुं तु न्यायप्रयोज्यानुमानम्परार्थानुमानम्। प्रतिज्ञादिवाक्यपञ्चकसमुदायो न्यायः। प्रतिज्ञादीनि च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि। साध्यविशिष्टपक्षबोधजनकं वचनं प्रतिज्ञावाक्यम्। पञ्चम्यन्तन्तृतीयान्तं वा लिंगप्रतिपादकं वचनम् हेतुवाक्यम्। व्याप्तिप्रतिपादकन्दृष्टान्तवचनमुदाहरणवाक्यम्। उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनमुपनयवाक्यम्। पक्षे साध्यस्याबाधितत्वप्रतिपादकं वचनम् निगमनवाक्यम्॥ पर्वतो वह्निमानिति प्रतिज्ञा। धूमवत्त्वादिति हेतुः।योयो धूमवान् ससोग्निमान्, यथा महानसः इत्युदाहरणम्। तथा चायम् इत्युपनयः। अयं पर्वतोपि वह्निव्याप्यधूमवानित्यर्थः। तस्मात्तथा इति निगमनम्। वह्निव्याप्यधूमवत्त्वादयं पर्वतोपि वह्निमानित्यर्थः। अनुमानवाक्यै-

कदेशत्वोपचारादेतानि वाक्यान्यवयवा इत्युच्यन्ते । लिंगं त्रिविधम्—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि । यथा—वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निरित्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति न तत्र धूम इति व्यतिरेकव्याप्तिः । ह्रदमहानसौ दृष्टान्तौ। अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा—घटोभिधेयः प्रमेयत्वात्, पटवत्।अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्य प्रमेयत्वादभिधेयत्वाच्च । व्यतिरेकमात्रव्याप्तिकं केवलव्यातिरेकि यथा—पृथिवीतरेभ्यो भिद्यते, गंधवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवद्यथा जलम्, न चेयन्तथा तस्मान्न तथेति।अत्र यद् गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात् । केचित्त अनुमानं त्रिविधमित्युक्त्वा असद्विपक्षं केवलान्वयि असत्सपक्षं केवलव्यतिरेकिसत्सपक्षविपक्षमन्वयव्यतिरेकि इत्यूचुः, पूर्ववदुदाहरणानि । साध्यसाधनयोः साहचर्यमन्वयः । तदभावयोः साहचर्यं व्यतिरेकः । तत्रान्वयव्यातिरेकि पञ्चरूपोपपन्नम् । तानि च-पक्षधर्मत्वम्, सपक्षे सत्त्वं, विपक्षाद्व्यावृत्तिः, अबाधितत्वम्, अविद्यमानसत्प्रतिपक्षकत्वञ्च।केवले अन्वयिव्यतिरेकिणी तु चतूरूपोपपन्ने एव एकत्र विपक्षाभावेनपरत्रसपक्षाभावेन तद्वृत्त्यभावात्।उदयनाचार्यमतंतु।साध्यसिद्धये साध्यसाधनव्याप्तेरेवापेक्षितत्वात्तदभावव्याप्त्या तात्सिद्धेरसामञ्जस्याच्चानुकूलतर्कानुगृहीतान्वयव्याप्तिकमेकमेव लिङ्गम्।न हि रूपवत्त्वेन वह्नौ गुरुत्वजन्यज्ञानाश्रयत्वेन जीवेवाऽणुत्वं

अनुकूलतर्काभावेपि कश्चिदनुमिमीते पूर्ववत् । शेषवत्सामान्यतो दृष्टमिति त्रिविधमनुमानं सूत्रकाराः प्राहुः । आद्यं, कारणेन-कार्यानुमानम्, यथा—मेघेन भविष्यद्वृष्टेः । द्वितीयं, कार्येण कारणा-नुमानम्, यथा—धूमेन वह्नेः । तृतीयन्तु उभयभिन्नं, यथा—पृथवीत्वेन द्रव्यत्वानुमानम् । अन्ये तु अन्वयव्याप्तिकं पूर्ववत्, व्यतिरेक-व्याप्तिकं शेषवत्, उभयविधव्याप्तिकं सामान्यतो दृष्टम् इत्याहुः । वीतावीतादिभेदा ग्रन्थान्तराज्ज्ञेयाः ॥ अथ हेत्वाभासाः, तत्त्वञ्च अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम् । अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन सत्प्रतिपक्षस्य विरोधिसामग्री-त्वेन साक्षात्प्रतिबन्धकत्वम् । इतरेषां परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्य व्यभिचारवत्तया, विरुद्धस्य सामानाधिकरण्या-भाववत्तया, व्याप्यत्वासिद्धस्य व्याप्यभाववत्तया, असाधारणानुपसं-हारिणोर्व्याप्तिसंशयाधायकतया व्याप्तिज्ञानप्रतिबन्धकत्वम् । आ-श्रयासिद्धस्वरूपासिद्धयोः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । ते च सव्यभि-चारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पंच हेत्वाभासाः । सव्यभिचा-रोनैकान्तिकः । स त्रिविधः—साधारणासाधारणानुपसंहारिभेदात् । तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकांतिकः, यथा—पर्वतोग्निमान्, प्रमेयत्वादिति । अत्र प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वा-त्साधारणत्वम् । सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा—शब्दो नित्यः शब्दत्वादिति । शब्दत्वं सर्वेभ्यो नित्यानित्येभ्यो

व्यावृत्तं, शब्दमात्रवृत्ति। अन्वयव्यतिरेकदृष्टांतरहितोऽनुपसंहारी। यथा—सर्वमनित्यं प्रमेयत्वात्। अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति॥ साध्याभावव्याप्तो हेतुर्विरुद्धः। यथा-शब्दो नित्यः कार्यत्वादिति। कार्यत्वन्नित्यत्वाभावेनाऽनित्यत्वेन व्याप्तम्। यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रातिपक्षः। यथा—शब्दो नित्यः श्रावणत्वात्, शब्दत्ववत्। शब्दोऽनित्यः कार्यत्वात, घटवत्। ईदृशस्थले यत्रानुकूलस्तर्कस्तेन द्वितीयं बाध्यते, यथात्र द्वितीयानुमानेन प्रथमं बाध्यते॥ असिद्धस्त्रिविधः आश्रयासिद्धः, स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति। पक्षतावच्छेदकाभाववत्पक्षको हेतुः आश्रयासिद्धः। यथा—गगनारविंदं सुरभि, अरविन्दत्वात, सरोजारविंदवत्। अत्र पक्षभूतेऽरविन्दे गगने पक्षतावच्छेदकं गगनीयत्वन्नास्ति॥ पक्षावृत्तिर्हेतुः स्वरूपासिद्धः। यथा—शब्दः गुणः चाक्षुषत्वात, रूपवत्। अत्र चाक्षुषत्वं हेतुः पक्षे न वर्त्तते॥ स्वरूपासिद्धोऽनेकधा। तत्र शुद्धासिद्धो दर्शित एव। पृथिव्यादयश्चत्वारः परमाणवः नित्याः गन्धवत्त्वात्, इत्यत्र हेतोः पक्षैकदेशावृत्तित्वेन भागासिद्धः। वायुः प्रत्यक्षः, रूपवत्त्वे सति स्पर्शवत्त्वात्। अत्र विशेषणासिद्धः। अत्रैव विशेष्यविशेषणवैपरीत्यन्यासे विशेष्यासिद्धः॥सोपाधिको हेतुः व्याप्यत्वासिद्धः। यथा-पर्वतः धूमवान्, वह्निमत्त्वात्, महानसवत्। वह्निमत्त्वे हेतौ आर्द्रेन्धनसंयोग उपाधिः। साध्यव्यापकत्वे सति साधनाव्यापकः उपाधिः। स चतुर्विधः—निरवच्छिन्नस्य, पक्षधर्मावच्छिन्नस्य, साधनावच्छि

त्वस्योदासीनधर्मावच्छिन्नस्य च साध्यस्य व्यापकत्वात् । आद्यः आर्द्रेन्धनसंयोगः, द्वितीयः वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र उद्भूतरूपवत्त्वम् बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकत्वात्, तृतीयः ध्वंसाभावो विनाशी जन्यत्वादित्यत्र भावत्वं जन्यत्वावच्छिन्नविनाशित्वव्यापकत्वात्, चतुर्थः प्रागभावो विनाशी प्रमेयत्वादित्यत्र भावत्वं जन्यत्वावच्छिन्नविनाशित्वव्यापकत्वात् । तथा चोक्तप्रकारान्यतमसाध्यव्यापकत्वे साधनाव्याप्यकत्वमुपाधित्वमिति लक्षणं बोध्यम् । उपाधेः प्रयोजनन्तु व्यभिचारस्यानुमानम् । यथा—वह्निर्धूमव्यभिचारी, धूमव्यापकार्देन्धनसंयोगव्यभिचारित्वात्, यो यद्व्यापकव्यभिचारी स तद्व्यभिचारी, यथा—पृथ्वीत्वव्यापकमूर्तत्वव्यभिचारिद्रव्यत्वं पृथ्वीत्वव्यभिचारि । यस्य हेतोः साध्याभावः प्रमाणांतरेण निश्चितः स बाधितः । यथा—वह्निः अनुष्णः द्रव्यत्वात्, जलवत् । अत्रानुष्णत्वस्य साध्यस्याभावः प्रत्यक्षेणावगम्यते, बाधित एव कालात्ययापदिष्ट उच्यते । दुष्टलक्षणमपि हेत्वाभासः । तत्र लक्षणेनेतरभेदसाधकानुमानेऽतिव्याप्तं लक्षणं व्याप्यत्वासिद्धम् । असाधारणधर्मस्योपाधित्वात् । अव्याप्तं भागासिद्धम् । असम्भवग्रस्तं तु स्वरूपासिद्धमिति संक्षेपः ॥

इत्यनुमानम् ।

---

उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः। कश्चिन्नागरो गवयशब्दार्थमजानन्नारण्यकपुरुषाद्गोसदृशो गवय इत्यति-

देशवाक्यं श्रुत्वा तदर्थं निश्चित्य वनं गतस्तत्र गवयं पश्यति । ततः अयं गोसदृशः इति तस्य प्रत्यक्षं ज्ञानमुत्पद्यते, तदेवोपमितौ करणम् । ततस्तस्यातिदेशवाक्यार्थस्मरणं जायते, तत्तस्य करणस्य व्यापारः । ततस्तस्य गवयो गवयपदवाच्य इति शक्तिज्ञानमुत्पद्यते, तदेवोपमितिः फलम् । केचित्तु सादृश्यप्रत्यक्षं न करणम् अपि तु अतिदेशवाक्यार्थः करणं, शेषम्पूर्ववदित्याहुः । वेदान्तिनस्तु गवयनिष्ठगोसादृश्यप्रत्यक्षं करणम्, मम गौरनेन सदृशीति ज्ञानम्फलमित्याहुः। तच्चोपमानं त्रिधा—तत्र सादृश्यविशिष्टपिण्डज्ञानादुपमितिः। प्रकृतोदाहरणे, एवं नासिकालसच्छृङ्गरूपासाधारणधर्मविशिष्टपिंडज्ञानात्खड्गः खड्गपदवाच्यः । लम्बग्रीवोऽसमानपृष्ठश्चेत्यादिवैधर्म्यविशिष्टपिण्डज्ञानादुष्ट्र उष्ट्रपदवाच्य इत्युपमितिः । वैशेषिका उपमानं नांगीकुर्वते ॥

इत्युपमानम् ।

---

आप्तोक्तवाक्यं शब्दप्रमाणम् । यथा—जलेन सिञ्चति । प्रयोगहेतुभूतयथार्थज्ञानवान् आप्तः । आकांक्षादिमत्पदसमूहो वाक्यम् । शक्तम्पदम् । यथा—घटादिपदम् । तेन आख्यातादिप्रत्ययानामपि न्यायशास्त्रे पदत्वेन पचतीत्यादेश्च वाक्यत्वेन व्यवहारः । वाक्यं द्विधा—लौकिकं वैदिकं च । लौकिकमाप्तोक्तं प्रमाणमन्यदप्रमाणम् । वैदिकं तु सर्वज्ञेश्वरप्रणीतत्वात्सर्वमेव प्रमाणम् । भ्रमप्रमादविप्रलिप्साकरणापाटवानां दोषाणामल्पज्ञे जीव एव संभवात । न च वेदः अपौरुषेय इति वाच्यम् । वेदः पौरुषेयः वाक्यत्वात्, भारतादिवत्

इत्यनुमानेन पौरुषेयत्वसिद्धेः । न च स्मर्यमाणकर्तृत्वमुपाधिः, वेदेपि सत्त्वेन साधनव्यापकत्वात् । स्मृत्यादीनां वेदमूलभूता काचिच्छाखा उच्छिन्नेति कल्प्यते । केचित्तु मूलादर्शने स्मृतेरप्रामाण्यमेवाहुः ॥ तद्वैदिकं वाक्यं त्रिधा-विधिमंत्रार्थवादभेदात् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः । यथा—ज्योतिष्टोमेन स्वर्गकामो यजेतेति । विधिस्त्रिधा—अपूर्वनियमपरिसंख्याभेदात् । प्रमाणांतरेणाप्राप्तस्य प्रापको विधिः अपूर्वविधिः । यथा—ज्योतिष्टोमेन यजेतेति।पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः । यथा—व्रीहीनवहन्ति, अत्र वितुषीकरणार्थं नखविदलनपक्षे प्रवृत्तौ अप्राप्तमवहननं नियम्यते । उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः । यथा—पञ्च पञ्चनखा भक्ष्याः, अत्र शशादीनां वानरादीनाञ्च पञ्चनखानाम्भक्षणे रागतः प्राप्ते वानरादीनां निवृत्तिरनेन क्रियते, न तु शशादिभक्षणं विधीयते, रागप्राप्तत्वात् । प्रयोगसमवेतार्थस्मारको वाक्यविशेषो मन्त्रः । इषेत्वा इत्यादिप्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः । स त्रिधा—गुणवादानुवादभूतार्थवादभेदात् । प्रमाणान्तरविरुद्धार्थज्ञापकः शब्दो गुणवादः । यथा—आदित्यो यूपः । अत्र काष्ठमयस्य यूपस्यादित्याभेदः।प्रत्यक्षविरुद्धोत एष गुणवादः । प्रमाणान्तरेण निर्णीतार्थज्ञापकः शब्दः अनुवादः । यथा—अग्निर्हिमस्य भेषजम् । तत्काले तद्गुणज्ञापकः शब्दो भूतार्थवादः । यथा—जरायामप्ययं शूरः । एवमुक्तरूपं वाक्यमेव शाब्दप्रमायाः करणं प्राञ्च आहुः । नव्यास्तु पदज्ञानङ्क-

रणन्न तु पदम्, मौनिलिखितश्लोकादौ पदाभावादित्याहुः। वृत्त्या पदजन्यपदार्थस्मरणं व्यापारः । आकाङ्क्षादिसहकारिशाब्दबोधः फलम् । एकपदर्थेऽपरपदार्थसंसर्गविषयकञ्ज्ञानं शाब्दबोधः । यथा—नीलो घट इत्यत्र घटे नीलाभेदज्ञानम् । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्या पदज्ञानात्पदार्थस्मरणञ्जायते । शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः सम्बन्धो वृत्तिः। सा च द्विधा—शक्तिर्लक्षणा च। अस्मात्पदादयमर्थो बोद्धव्यः इतीश्वरेच्छा शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः । वैयाकरणाः पातञ्जलाश्च वाच्यवाचकभावमूलभूतपदतदर्थयोरध्यासरूपन्तादात्म्यमेव शक्तिरित्याहुः । वेदान्तिनस्तु स्वस्वकार्यकरणसामर्थ्यम्पदार्थमात्रे भिन्नन्तद्वत्पदेपि अर्थबोधकता शक्तिरित्याहुः, परन्तु अन्यशक्तिः स्वरूपसती कार्यकरी, पदे शक्तिर्ज्ञातैवेति । नव्यास्तु इच्छैव शक्तिस्तेनाधुनिकसंकेतितेपि शक्तिरस्त्येव । गगरीत्याद्यपभ्रंशेषु तु शक्तिभ्रमाच्छाब्दबोध इति केचित् । तत्रापि शक्तिरस्तीति परे। शक्तिर्द्विधा—योगो रूढिश्च । प्रकृतिप्रत्ययरूपावयवशक्तिर्योगः । यथा—कर्त्रादिपदे । समुदायशक्तिः रूढिः । यथा—विप्रादिपदे । धातुप्रत्ययनिपातेषु च शक्तं पदन्त्रिधा-प्रकृतिः, प्रत्ययोऽव्ययश्च । प्रकृतिर्द्विधा—प्रातिपदिकं धातुश्च । तत्र प्रातिपदिकं चतुर्विधम्—रूढं, यौगिकं, योगरूढं, यौगिकरूढं च। समुदायमात्रशक्तिकं रूढम्। यथा—विप्रादिपदम्। रूढमेव सञ्ज्ञा। सा च त्रिधा-तत्र जात्या सङ्केतवती गवादिर्नैमित्तिकी । वार्त्ताहरत्वाद्युपाधिना प्रवृत्ता दूतादिः

औपाधिकी। आधुनिकी संज्ञा चैत्रादिष्टिघुभादिश्च पारिभाषिकी। अवयवमात्रशक्तिकं यौगिकम्, कर्त्रादि। उभयशक्त्यैकार्थबोधकं, योगरूढम्, पंकजादि। एतद्धि, आकांक्षावशाद्योगेनापि रूढिलभ्यमेव, रूढ्यापि च योगलभ्यमेवार्थं बोधयति, न तु तद्भिरुद्धम्। पंकजं कुमुदमित्यादौ तु लक्षणयैव कुमुदस्य बोधः। मीमांसकास्तु रूढ्यर्थभिन्नयोगार्थम्प्रति रूढिधियः प्रतिबन्धकत्वं, तेन रूढेरस्मरणे योगेनैव पंकजपदेन कुमुदबोधः। एवं योगास्मरणे रूढ्यैव स्थलकमलबोधः, न तु लक्षणयेति प्राहुः। चिंतामणिकृतस्तु योगार्थरूढ्यर्थयोर्युगपदुपस्थितौ यत्र मिलित्वैवान्वयबोधस्तत्रैव रूढिभिन्नार्थान्वयो न भवति, अन्यत्र योगेन कुमुदस्य रूढ्या च स्थलकमलस्य बोधो भवत्येवेत्याहुः। रूढियोगाभ्यां स्वातन्त्र्येणार्थबोधकं यौगिकरूढम्, उद्भिदादियोगेन वृक्षादिकं रूढ्या यज्ञविशेषं बोधयति। यौगिकादित्रयं कृत्तद्धितसमासभेदात्प्रत्येकं त्रिधा। तत्र यौगिकम्, पाचकदाशरथिराजपुरुषादि। योगरूढम्, नायकसागरनीलकंठादि यौगिकरूढम्, मंडपमातुलकाननादि। वाक्यरूपेषु यौगिकादिषु पदव्यपदेशो भाक्तः॥ धातुस्त्रिधा-गणपठितः, सौत्रः सन्नादिप्रत्ययान्तश्च। पुनस्त्रिधा-परस्मैपद्यात्मनेपदी उभयपदी च। प्रत्ययः पञ्चधा-विभक्तिधात्वंशकृत्तद्धितस्त्रीप्रत्ययभेदात्। विभक्तिस्सुप्तिङ्भेदाद्विधा। धात्वंशः सन्क्यजादिः। शेषं स्पष्टम्। सा च शक्तिर्घटादिपदानां जात्याकृतिविशिष्टव्यक्तौ, आकृतिरवयवानां संस्थानं संयोगविशेषः, जातिविशिष्टव्यक्तावेवेति केचित्। नव्यास्तु लक्ष्यतावच्छेदके

लक्षणां विनैव शक्यतावच्छेदके शक्तिं विनैव तत्प्रकारकबोधसम्भवाद्यक्तावेव शक्तिरित्याहुः। जातिव्यक्तितत्संबन्धेषु शक्तिरित्यन्ये। जातावेव शक्तिः, व्यक्तिबोधस्त्वाक्षेपादिति मीमांसकाः। तत्राक्षेपपदेन केचित्तु घटत्वं व्यक्त्याश्रितं, जातित्वात्, पटत्ववत् इत्यनुमानम्, भाट्टास्त्वर्थापत्तिम्, गुरवस्तु समानवित्तिवेद्यतामाहुः। मण्डनमिश्रास्तु जातौ शक्तिं व्यक्तौ लक्षणामाहुः। कुब्जशक्तिवादिनस्तु जातिव्यक्त्योः शक्तिरस्ति परं तु जातौ घटत्वविशिष्टव्यक्तिस्मरणे शाब्दबोधे च ज्ञातैव हेतुः, व्यक्तौ तु स्वरूपसती हेतुरित्याहुः। नीलो घट इत्यादौ अभेदस्यापि भानात्संसर्गेऽपि शक्तिस्तथा च इतरान्वितघटादौ शक्तिरिति भाट्टाः। गवादिशब्दानामानयनादिकार्यान्विते गवादौ शक्तिरिति प्राभाकराः। एते एवान्विताभिधानवादिनः, भूतले घट इत्यादिसिद्धेऽपि बोधान्नैतद्युक्तम्, अन्वयस्य च पदार्थसंसर्गस्याकांक्षालभ्यत्वात्तत्र शक्तिकल्पनं व्यर्थमेव, धेन्वादिपदं च धानकर्मत्वगोत्वोभयादिविशिष्टार्थकम्। यथा—नानाधर्मविशिष्टैकधर्मिवाचकपदाच्छक्तिभ्रमातो नैकं धर्मं परित्यज्यापरधर्मबोधस्तथा सूर्यत्वचन्द्रत्वरूपनानाधर्मविशिष्टनानाधर्मिवाचकपुष्पवन्तादिपदाच्चन्द्रत्वादिकं परित्यज्य न सूर्यत्वादिप्रकारकबोधः। अत्र शक्तेरैक्यान्न नानार्थता। एवं सर्वनामपदानामपि बुद्धिविषयतावच्छेदकत्वेन शक्तेरैक्यान्न नानार्थता, परन्तु, घटत्वादिषु तत्पदजन्यबोधविषयत्वम्भासते। तानि विशेषणान्युच्यन्ते। बुद्धिविषयतावच्छेदकत्वं तु संकेतेन नावगाह्यत इति तदुपलक्षणमित्युच्यते। युष्मदः

स्वसंबोध्ये । अस्मदः, उच्चारणकर्त्तरि । सर्वपदस्याशेषे । किमो, जिज्ञासिते । अव्ययकिमस्तु वितर्के । यत्पदस्य, तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने । तदो, यत्पदोपस्थाप्ये । इदमेतदोः, प्रत्यक्षबुद्धिविषये । अदसः, परोक्षबुद्धिविषये । स्वनिजादिपदानां, समभिव्याहृतपदोपस्थाप्ये । समभिव्याहारश्चात्रैकवाक्यघटकत्वम् । एकशब्दस्य कैवल्यादिविशिष्टे शक्तिः । कैवल्यं च सजातीयद्वितीयरहितत्वम् । हर्यादावनेकार्थे तु विनिगमनाभावान्नानाशक्तिकल्पनम्, इत्यादिः शक्तेः प्रपञ्चो ग्रन्थान्तराज्ज्ञेयः ॥ धातवो द्विधा—अकर्मकाः सकर्मकाश्च, तत्राद्याः स्पन्दादयस्तेषां केवलव्यापारे शक्तिः । अन्त्या गम्यादयस्तेषां फलावच्छिन्नव्यापारे, फलञ्च व्यापारजन्यं गमिपच्यादौ संयोगविक्लित्त्यादि, व्यापारश्च चलनाधिश्रयणादिरूपः । फले व्यापारे च धातोः पृथक् शक्तिस्तयोस्सम्बन्धः संसर्गमर्यादालभ्यः इत्यपि मतम् । पृथक् शक्तिरेव खण्डशक्तिर्विशकलितशक्तिश्चोच्यते । ज्ञाप्रभृतौ सकर्मकव्यवहारो भाक्त इत्याहुर्नव्याः । प्राञ्चस्तु धातोर्व्यापारमात्रे शक्तिः फलन्तु कर्मार्थप्रत्ययगम्यम्, सकर्मकत्वन्तु न फलावच्छिन्नव्यापारबोधकत्वम्, अपि तु फलान्वितव्यापारबोधकत्वम्, द्वितीयासाकांक्षतुमन्तधातुत्वं वा इत्याहुः । मीमांसकास्तु फलमात्रे धातूनां शक्तिर्व्यापारस्तु तिङ्बोध्य इत्याहुः । वैयाकारणास्तु भू-सत्तायामित्यादिना गणपाठे सर्वत्र फलस्यैव निर्देशादकर्मकाणामपि फलवाचित्वमाहुस्तेषाम्मते

सकर्मकत्वं फलव्यधिकरणव्यापारवाचित्वम् । ज्ञादिधात्वर्थभूतं ज्ञानादि, केचित् फलत्वेन केचिद्व्यापारत्वेन व्यवहरन्ति । एवं सामान्यतो धात्वर्थो निरूपितः ॥ अथ विशेषतः केषांचिद्धातूनामर्थाः प्रायः शब्दार्थरत्नादुद्धृत्य लिख्यन्ते । वक्ष्यमाणास्त्वत्र नोच्यन्ते । तत्र भवत्यस्त्यादीनां सत्ता आत्मधारणं चार्थः । उत्पत्त्यनुकूलो व्यापारो भवतेरर्थः । नश्यतेरुत्पत्तिमदभावः । जानातेर्ज्ञानम्, इदमेव लौकिकज्ञानम् । दृक्श्रोत्रघ्राणरसनत्वङ्मनःकरणकत्वेन विवक्षितन्दृशिश्रुघ्रारसस्पृशमनूनामर्थः । लिङ्गादिज्ञानजन्यं ज्ञानमनुमिनोतेः । शब्दजन्यं शृणोतेः । भावनाख्यसंस्कारजन्यं स्मरतेः। संस्कारेन्द्रियसन्निकर्षजन्यम्प्रत्यभिजानातेः । एवन्तत्तत्समानार्थकधातोश्चार्थः । विरुद्धद्वयप्रकारैकविशेष्यकं ज्ञानं संशेतेः। संशयान्यज्ञानं निश्चिनोतेः।अबाधितविषयकम्प्रमिणोतेः ।बाधितविषयकं ज्ञानम्भ्राम्यतेः । गौरवहेतुकं ज्ञानं सम्मन्यतेः । अपकर्षहेतुकं ज्ञानमवजानातेः । मोहभयादेरपि ज्ञानेऽन्तर्भावः । इच्छतेः इच्छा । इयञ्चेच्छा नानाविधा-भोज्यविषयिणी रुचिरूपा भक्ष्यत्वप्रकारिकेच्छा । योषिदादिविषयिणी, कामानुरागादिरूपा । सामान्यभोग्यविषयिणी, अभिलाषरूपा । औत्सुक्यहेतुका भोज्यादिविषयिणी लालसारूपा । तत्तद्वाचकधातवस्तु रोचत्यादय एवमन्येऽपि । यततेः समवायेन यत्नः । एवं प्रवर्त्ततेर्निवर्त्ततेश्च बोध्यम् । करोतेरपि यत्न एवार्थः । वर्द्धमानस्तु करोतेस्तूत्पत्त्यनुकूलो यत्नोऽर्थस्तेन न सकर्मकत्वहानिः इत्याह । द्वेषो द्विषेरर्थः ।

संयोगस्तदनुकूलव्यापारश्च तद्विशिष्टो वा गम्यादेरर्थः। संयोगश्च नानाहेतुकत्वेन नानाधिकरणकत्वेन च नानाविधः। ततश्च तत्तत्संयोगफलबोधकानां सर्वेषामेव धातूनां गत्यर्थतावसेया। तथाहि-पूर्वदशसंयोगनाशानन्तरोत्तरदेशसंयोगो गमेः फलम्। बहिर्व्विभागजन्याभ्यन्तरसंयोगः प्रविशेः। द्रवद्रव्यकरणकसंयोगः सिचेः, जलं सिञ्चतीत्यादौ तु विजातीयसंयोगावच्छिन्ने लक्षणा। एवं सुरभ्यादिद्रव्यकरणकसंयोगो लिपेः, स्नेहद्रव्यकरणकसंयोगो मर्द्दयतेः, सर्व्वशरीरसंयोगो मज्जतेः, फलं बोध्यम्। एवमन्येषामपि भ्रम्यादीनां गत्यर्थत्वमवसेयम्। विभागजन्यसंयोगः क्रिया च पतेरर्थः; अधःसंयोगावच्छिन्नक्रिया च। क्रियामात्रन्त्वपरे तदर्थमाहुः। विभागजनकक्रिया त्यज्यादेरर्थः। अवयवविभागावच्छिन्ना तु भिद्यादेरर्थः। दुहादौ—विभागपूर्व्वकादानं चिञोर्थः। विक्लित्त्यनुकूलव्यापारपूर्व्वकोत्पत्त्यनुकूलव्यापारः पचेरर्थः। शासनानुकूलस्वसम्प्रदानकदानानुकूलव्यापारो दण्डयतेः, अभिभवपूर्वकङ्ग्रहणञ्जयतेः, विलोडनपूर्वकोत्थापनम्मन्थतेः, वञ्चनापूर्वकग्रहणं मुषेः, गत्यनुकूलव्यापरविशेषः कर्षतेः, बलाद्ग्रहणपूर्वकस्थानान्तरप्रापणं हरतेः, अन्येषां दुहादीनामर्था अग्रे उक्ताः॥ विषयतया प्रीत्यनुकूलस्तत्समानाधिकरणव्यापारो रुचेः, बोधविषय इतरादर्शनयोग्यदेशस्थापनं ह्नुतेः, स्वाभिप्रायबोधानुकूलस्थितिस्तिष्ठतेः, स्वाभिप्रायबोधानुकूलशपथकरणं शपतेः, इच्छा स्पृहयतेः। प्रातिस्विकरूपेण सर्वेषां धातूनामर्थनिरूपणस्य बाहु-

ल्यात्कर्तुमशक्यतयाधुना कतिचिदर्था एव निरूप्यन्ते । पराभिभवेच्छा स्पर्धाऽकर्मिका, अभिभवेच्छामात्रविवक्षायां सकर्मिका । परदुःखप्रहरणेच्छा दयाकर्मिका ॥ निर्दोषत्वेनाभिमानो विश्वासः । मेध्यानाडीसंयोगः शय्यासंयोश्च स्वापः, निद्रा शयनमपि तथा । स्वापाभावो जागरणम् । मुखविकासो हासः । क्रियामात्रं स्पन्दनं, चलनं कम्पनञ्च । एते अकर्मकाः । आस्वादनं रसानुभवो रुचिश्च । यथाक्रमं सकर्मकोऽकर्मकश्च । जिह्वाकरणको रसानुभवो लेहनम् । आकर्षणपूर्व्वकः स एव चोषणम् । दन्तकरणकः स एव चर्व्वणमिति विवेकः । मोदादयः आनन्दविशेषाः । अविद्यमानात्मगुणज्ञापनं श्लाघा । अभिमानहेतुकं शब्दद्वारा तज्ज्ञापनं विकत्थनम् । भेदनानुकूलव्यापारो लेखनम् । संस्थानविशेषरचनमपि । हिंसाहेतुको दन्तकरणकः संयोगानुकूलो व्यापारो दंशनम् । रागहेतुकोऽधरकरणकः स एव चुम्बनम् । निवृतिर्विरामः । पराजयस्तु युद्धनिवृत्तिः, कृत्यसाध्यत्वधीप्रयुक्तयुद्धप्रवृत्त्यभावः, अभिभवहेतुव्यापारश्च । गर्हापूर्वकनिवृत्तिर्जुगुप्सा । स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः उत्पादः, प्रागभावप्रतियोगित्वञ्च । द्रव्यांतरग्रहणपूर्वकन्दानम्प्रतिदानम् । दैवनिरूपणं राधनमीक्षणं चेति 'राधीक्ष्योरि' ति सूत्रविषये । देयत्वेनाभ्युपगमः प्रतिश्रवः, आश्रवश्च । हर्षानुकूलो व्यापारः प्रतिगिरणम् । उत्कटद्वेषः क्रोधः । अनिष्टानुपेक्षणमपीर्ष्या । आरंभकसंयोगविरोधिविभागावच्छिन्नक्रिया छेदनम् । गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया भजनमाराधनमुपासनं पूजा-

च । वह्न्यधिकरणकपतनावच्छिन्नमन्त्रकरणकक्रिया होमः । मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः क्रयः । मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलस्त्यागः परस्वत्वजनकमूल्यग्रहणं वा विक्रयः । भोगावच्छिन्नम्पातित्यमेव पतनम् । स्वत्वावच्छिन्नो व्यापारो लाभः प्राप्तिः । गलबिलाधःसंयोगानुकूलो द्रवद्रव्यकर्मकव्यापारः पानम् । गलबिलावधिकोर्द्धसंयोगजनको व्यापारो वमनमुद्गिरणञ्च । दोषाविष्करणं निन्दा । गुणाविष्करणम्प्रशंसनम् । एतौ व्यापारौ प्रायशः शब्दरूपौ, कथनेनैव हि सर्व्वे दोषादिकम्प्रकटीकुर्वन्ति।एते च सर्व्वे सकर्मकाः।दोषत्यागः शुद्धिः, अकर्मिका, तत्करणविवक्षायां सकर्मिका । शोभाविशेषोत्पत्तिर्मण्डनम् । अकर्मकं, तत्करणविवक्षायां सकर्मकम् । गर्व्वहेतुकाभिमानोऽहङ्कारः, अकर्मकः । इतरभेदज्ञापनं विशेषणं लक्षणञ्च । याथातथ्येन ज्ञापनं निरूपणम् । साकल्येन सम्बन्धः व्याप्तिः । साध्यविशिष्टतया धर्म्मिनिर्देशः प्रतिज्ञा, एते सकर्मकाः।प्रीत्यवच्छिन्नसमंत्रकद्रव्यत्यागो यागः। स्वस्वत्वध्वंसानुकूलो व्यापारस्त्यागः। द्रवद्रव्यकरणकारम्भकसंयोगशैथिल्यापादनं विक्लेदनम् । द्रवद्रव्यानिस्सरणपूर्वकतत्काठिन्यापादनं शोषणम् । रज्ज्वादिकरणकगत्यादिरोधहेतुसंयोगानुकूलव्यापारो बन्धनम् । विषयविशेषे व्यवस्थापनं नियमनम् । प्राणवियोगानुकूलव्यापारो हननम् । विभागजनकव्यापारो मोचनम्, विभजनञ्च।एतानि सकर्मकाणि । अत्यन्तानलसंयोगजन्यनाशो दाहः, अकर्मकः, तत्करणविवक्षायां सक-

षेकः। मादकद्रव्यादिहेतुकाश्चित्तविक्षेपभेदा मादोन्मादप्रभृतयः। गतिनिवृत्तिः स्थितिः। वृद्धिरुपचयः। हानिरपचयः। आत्मनि निन्दितत्वज्ञानार्धीनो ज्ञानविशेषो लज्जा। हर्षजनकः हस्तादिविक्षेपः क्रीडा। विषयत्वापत्तिः प्रकाशः। विषयाभिलाषो रागः। तदनभिलाषो विरागो विरतिश्च। द्रवहेतुकक्रियाविशेषः स्यन्दनम्। एतान्यकर्मकाणि। उक्तेष्वर्थेषु धातूनां शक्तिरर्थान्तरेषु लक्षणा। शक्तिग्रहश्चासति बाधके व्याकरणादिभिः। उक्तञ्च—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः"। धातुप्रत्ययादीनां शक्तिग्रहो व्याकरणात्। उपमानाच्छक्तिग्रह उक्तः। व्यवहारतः-प्रयोजकेन घटमानयेत्युक्ते तच्छ्रुत्वा प्रयोज्येन घट आनीते व्युत्पित्सुर्घटानयनं घटमानयेति शब्दप्रयोज्यमवधारयति। ततश्च घटन्नय गामानयेत्यादिवाक्यादावापोद्वापाभ्यां घटादिशब्दस्य घटादौ शक्तिं गृह्णाति। व्यवहार एव परानपेक्षत्वाच्छक्तिग्रहे मुख्यं कारणम्। 'यवमयश्चरुर्भवती'-त्यत्र 'सर्वसस्यपत्रशातनेऽप्येते मोदमानास्तिष्ठन्ती'ति वाक्यशेषाद्यवशब्दस्य दीर्घशूके। सहकारतरौ पिको रौतीति सहकारसान्निध्यात्पिकशब्दस्य कोकिले शक्तिग्रहः। शेषं सुगमम्। शक्तिरिव लक्षणापि वृत्तिः। सा च शक्यसंबंधः। तेन गंगायां घोषः इत्यत्र गङ्गापदशक्यप्रवाहसम्बन्धस्तीरे लक्षणा। सैन्धवादौ गङ्गातीरयोरिव लवणाश्वयोः सम्बन्धाभावान्नानाशक्तिकल्पनम्, विनिग-

मनाभावाच्च । तद्वीजं चान्वयानुपपत्तिरिति प्राञ्चः । यष्टीः प्रवेशयेत्यादावननुगमाय तात्पर्यानुपपत्तिर्बीजमिति नव्याः। तात्पर्यं वक्तुरिच्छा । सा च-जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा, लक्षितलक्षणा चेति चतुर्द्धा । लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा जहल्लक्षणा । यथोक्तोदाहरणे । लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा अजहल्लक्षणा । यथा—छत्रिणो यान्तीत्यत्रैकसार्थवाहित्वेन छत्रिणान्तदितरेषाञ्च बोधः । शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणा जहदजहल्लक्षणा, सैव भागलक्षणा । यथा—सोयं घट इत्यत्र तद्देशकालबाधः । अनित्यो घट इत्यादौ घटत्वस्यैव तत्तांशस्योपलक्षणतया भानसंभवेऽत्र न लक्षणांगीकार इत्यन्ये । शक्यार्थपरंपरासम्बन्धरूपा लक्षणा लक्षितलक्षणा। यथा—द्विरेफादिपदे । तत्र स्ववाच्यरेफद्वयघटितभ्रमरशब्दवाच्यत्वसम्बन्धेन भ्रमरबोधः । जहल्लक्षणायामेवास्या अन्तर्भावमाहुः । केचित्तु केवललक्षणा लक्षितलक्षणा चेति भेदद्वयमुक्त्वा केवलाया आद्यं भेदत्रयमाहुः । परे तु शुद्धा गौणी चेति भेदद्वयमुक्त्वा शुद्धाया आद्यं भेदत्रयमाहुः । पुनर्लक्षणा द्विधा—निरूढलक्षणा स्वारसिकलक्षणा च । तत्र अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा निरूढलक्षणा । यथा—नीलो घट इत्यादौ नीलादिपदानां नीलगुणविशिष्टद्रव्यादौ । अधुनातनतात्पर्यविषयीभूतार्थनिष्ठा लक्षणा स्वारसिकलक्षणा, इयमेव काव्यविद्भिः प्रयोजनवत्युच्यते । शक्यार्थसादृश्यरूपेणा-

शक्यार्थबोधप्रयोजिका वृत्तिः गौणी वृत्तिः। यथा—सिंहो देवदत्त इत्यादौ सिंहशब्दस्य शूरत्वादिविशिष्टे। सा तु स्ववृत्तिशूरत्वादिरूपपरम्परासम्बन्धरूपत्वाल्लक्षितलक्षणैवं। वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपा लक्षणापि न। समासेपि वाक्यत्वाद्वैयाकरणाभिमता शक्तिर्नास्त्येव। तत्पुरुषे पूर्वपदे लक्षणा। तथाहि—राजपुरुष इत्यादौ राजपदार्थस्य पुरुषपदार्थे साक्षाद्भेदेन नान्वयः, निपातातिरिक्तनामार्थयोः साक्षाद्भेदेनान्वयबोधस्याव्युत्पन्नत्वात्। लुप्तविभक्तिस्मरणकल्पनन्तु कल्पितप्रक्रियामात्रमूलकत्वेन, अस्मृतविभक्तेरपि ततो बोधोदयेन च न वास्तवम्। तस्माद्राजपदादौ राजसंबंधिनि लक्षणा, तस्य पुरुषेणाभेदान्वयः। बहुव्रीहौ गोपदस्य गोमति लक्षणा, गवि चित्राभेदान्वयः। एकदेशान्वयास्वीकारे तु गोपदस्य चित्रगोमति लक्षणा, चित्रपदन्तात्पर्यग्राहकम्। धवखदिरावित्यादिद्वन्द्वे तु धवः खदिरश्च विभक्त्यर्थद्वित्वप्रकारेण बुद्ध्यते, तत्र न लक्षणा। अहिनकुलमित्यादौ समाहारस्यानुभवे परपदेऽहिनकुलसमाहारे लक्षणा, पूर्वपदं तात्पर्यग्राहकम्। समाहाराननुभवे तु न लक्षणा, तत्राऽहिर्नकुलश्च बुद्ध्यते, प्रत्येकमेकत्वान्वयः। कर्मधारये तु नीलपदार्थोऽभेदसम्बन्धेनोत्पलपदार्थे प्रकारस्तत्र न लक्षणा। उपकुंभमर्द्धपिप्पलीत्यादौ परपदे तत्संबन्धिनि लक्षणा, पूर्वपदार्थप्राधान्येन चान्वयः। पितरावित्याद्येकशेषे पितृपदे जनकदंपत्योर्लक्षणा। घटा इत्यादौ तु न लक्षणा, घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात्। दधि पश्यतीत्यादौ द्वितीयाद्यभावस्थले दधिपदस्य दधिकर्मत्वे लक्षणा, अघटः पट

इत्यत्र घटपदस्य घटभिन्नत्वे लक्षणा।प्रजयतीत्यादौ जिधातोः प्रकृष्ट-जये लक्षणा।उपसर्गस्तात्पर्यग्राहक इति। व्यंजनाख्यां तृतीयां वृत्ति-मालंकारिकाः प्रतिपादयन्ति। सा च द्विधा-शब्दशक्तिमूला अर्थश-क्तिमूला च।आद्यापि शक्तिलक्षणामूलत्वाद्द्विधा। तत्रानेकार्थशब्दस्य प्रकरणाद्यैरेकत्रार्थे नियंत्रणे सति वाच्यभिन्नार्थबोधिका शक्तिमूला। यथा-स्फुरन्मंडलो राजायमुदेति इत्यत्र चंद्ररूपोर्थस्तत्सादृश्यं वा व्यङ्ग्यं, द्वितीयार्थस्य शक्त्यैव भानसंभवाच्छक्तावेवास्या अन्तर्भाव-माहुः। द्वितीया च—यस्य प्रयोजनस्य प्रतिपत्तये लाक्षणिकश-ब्दप्रयोगस्तद्बोधको व्यापारः। यथा--गंगायां घोष इत्यत्र तीरे घोष इति वक्तव्ये लाक्षणिकशब्दप्रयोगस्तीरे गंगाभेदबोधनेन शैत्यपावन-त्वादिबोधार्थः, तद्बोधिका च व्यञ्जनैव। एतन्मते एतादृशलक्ष-णायाः शक्यतावच्छेदकप्रकारक एव बोधः। शैत्यपावनत्वविशिष्ट एव तीरे लक्षणांगीकाराल्लक्षणायामेवास्या अन्तर्भावमाहुः। अर्थ-शक्तिमूला च—वक्तृप्रस्तावादिवैशिष्ट्येन वाच्यभिन्नार्थबोधिका। यथा—"गच्छ गच्छसि चेत्कान्त पंथानस्सन्तु : ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥" अत्र वक्तृप्रस्तावैशि-ष्ट्येन त्वद्गमनोत्तरम्मम प्राणवियोगो भविष्यतीति व्यज्यते। इयं म-द्वियोगे प्राणवियोगाभिप्रायवती, तादृशवाक्यप्रयोक्तृत्वात् इत्याद्य-नुमानेन गतार्थमाहुः। यदि तु शक्तिमूलायां द्वितीयार्थे शक्तिरा-स्तान्नाम, चंद्रसादृश्यादेस्तु व्यंजनयैव भानम्, लक्षणामूलायामपि मानान्तरेणाज्ञातस्य शैत्यादेर्विशेषणत्वासम्भवान्न विशिष्टे लक्षणा

योग्या, नापि अर्थव्यंग्योऽर्थोऽनुमेयः, व्याप्तिग्रहपरामर्शाद्यननुसंधानात्, अनैकान्तिकहेत्वाभासग्रस्तत्वाच्च, किम्बहुना, द्योतकत्वतात्पर्यग्राहकत्वादिशब्दैर्व्यवहरद्भिरनिच्छद्भिरपि नैयायिकैर्व्यञ्जनाख्यं वृत्त्यन्तरमङ्गीकार्यमेव, विस्तरः काव्यप्रकाशादौ ज्ञेयः, इत्युद्भाव्यते तर्हि समाधानान्तरमन्वेष्यम् ॥ आकांक्षाऽऽसत्तियोग्यतातात्पर्यज्ञानान्यपि शाब्दबोधे कारणानि । तत्र येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तत्पदे तत्पदसमभिव्याहारः आकांक्षा । यथा—घटमानयेत्यत्र द्वितीयां विना घटपदं घटकर्मतां न बोधयतीति घटपदोत्तराम्पदत्वमाकांक्षा । एवं धातुपदाख्यातयोर्द्धातुकृतोर्बोध्या । स्तोकं पचतीत्यादावभेदान्वयबोधे द्वितीयान्तपदधातुसमभिव्याहार आकांक्षेत्यादिरनेकविधाकांक्षा ॥ यत्पदार्थेन सह यत्पदार्थस्यान्वयोपेक्षितस्तयोः पदयोरव्यवधानेनोपस्थितिरासत्तिः । यथा—घटमानयेत्यत्र, तदभावाच्च गिरिर्भुक्तं वह्निमान्देवदत्तेनेत्यत्र नान्वयबोधः । काव्यश्लोकादौ तु श्रवणानन्तरम् अभ्यासपाटवाच्छीघ्रमन्वयबोधादव्यवधानेनोपस्थितिर्भवति । यद्यपि वर्णानान्तज्ज्ञानस्य चाशुतरविनाशित्वेनाव्यवधानेनोत्तरपदस्मरणासम्भवस्तथापि तत्तद्वर्णानुभवजनितसंस्कारकूटादेव समूहालंबनात्मकपदस्मरणमविरुद्धम् । एतेन वैयाकारणाभिमतः स्फोटोऽपि प्रत्युक्तः ॥ एकपदार्थे परपदार्थसम्बन्धः योग्यता । यथा—जलेन सिञ्चति, अत्र जलस्य करणतया सेचनेऽन्वयः । वह्निना सिञ्चतीत्ययोग्यतोदाहरणम् । परे तु शाब्दबोधे योग्यता न हेतुः, वह्निना सिञ्चती-

त्यादौ श्रोतुर्भाषान्तरादिव बोधानापत्तेरिष्टापत्तौ च मृषा जल्पसीति प्रत्युत्तरानुपपत्तिरित्यूचुः । न च प्रमाकरणभूतमेव वाक्यमत्र वर्णनीयं योग्यतारहितं वाक्यं च न प्रमाकरणमतस्तादृशवाक्यवारणाय योग्यतावाच्येति वाच्यम्, विप्रलिप्सादिना कथितस्य जलेन सिंचतीत्यादिवाक्यस्य तथाप्यवारणात् । तत्र प्रयोक्तुरनाप्तत्वादेव वारणमिति चेदत्रापि किन्न स्यात्। तस्माद्यथा आसत्त्याकाङ्क्षाभ्यां विना वाक्यार्थस्य बोध एव न सम्भवति तथा योग्यता नापेक्षणीया, वक्तुराप्तत्वानाप्तत्वप्रयुक्ते प्रामाण्याप्रामाण्ये तु भिन्नसामग्रीग्राह्ये इत्यलम् ॥ वक्तुरिच्छा तात्पर्यम् । यथा--सैन्धवमानयेत्यत्र भोजनप्रकरणे लवणान्वयः । इदञ्चानेकार्थादिस्थल उपयुज्यते, तत्र प्रकरणं सिद्धार्थशब्दसन्निधिश्च प्रायो नियामके । द्वारमित्यादौ पिधेहीति शब्दाध्याहारादेव बोधः,द्वितीयार्थे शब्दस्यैवावश्यकत्वात् । अर्थाध्याहारमेवापरे प्राहुः ॥

अथ प्रत्ययार्थे निरूपणीये शाब्दबोधप्रकारः प्रायो व्युत्पत्तिवादादुद्धृत्य लिख्यते । तत्र चैकपदार्थेऽपरपदार्थस्य संसर्गः अपदार्थोऽपि संसर्गमर्यादया भासते । स च क्वचिदभेदः,क्वचिच्च तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः । अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्त्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते । यथा--नीलो घटो, नीलघटमानयेत्यादौ घटादौ नीलादेः, न तु विरुद्धविभक्तिमत्पदार्थस्य, नीलस्य घट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् ।

यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं, तत्र विशेष्यविशेषणपदयोः समानवचनकत्व-नियमः । यथा--प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । वेदाः प्रमाणमित्यत्र तु विशेषणपदोत्तरविभक्त्या बहुत्वविरुद्ध-मेकत्वं विवक्षितं, तच्च प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वेति । दधि सुन्दरमित्यादौ विशेष्यानन्तरम्, इदं दधीत्यादौ विशेषणा नंतरं विभक्तेरसत्त्वेपि विभक्तेरनुसन्धानाच्छाब्दबोधः । नीलं घट-मानयेत्यादौ नीलाद्युत्तरविभक्तेस्तु नैरर्थक्यमेव, अभेदो वार्थः । संसर्गमर्यादया अभेदभानं तु समास एव । अस्मिन्पक्षे समासव्या-सयोः पर्यायता न घटते, व्यासे अभेदस्य प्रकारत्वात्समासे संसर्ग-त्वात् । स्तोकं पचति, मृदु पचतीत्यौ स्तोकमृद्वादेर्धात्वर्थपाकादा-वभेदान्वयोपि व्युत्पत्तिसिद्धः । भेदान्वयबोधश्च प्रातिपदिकार्थधा-त्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते,न त्वन्येन । सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजा पुरुषः, भूतलं घट इत्यादौ राजभूतलादेः स्वत्वाधेयतादिसम्बन्धेन पुरुषघ-टाद्यंशे, तण्डुलः पचति इत्यादौ तण्डुलादेः स्वकर्मकत्वसम्बन्धेन पाकाद्यंशेन्वयाबोधान्निपातातिरिक्तप्रातिपदिकार्थयोः क्रियातादृश-प्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वात्, विभ-क्त्यर्थमंतराकृत्य तयोरप्यन्वयबोधात्साक्षादिति निपातातिरिक्तत्वा-दिविशेषणात्।भूतले न घटः, घटो न पट इत्यादौ घटादेर्नञर्थाभावेन, मुखं चन्द्र इवेत्यादौ मुखचंद्रादीनामिवार्थसादृश्यादिना, 'न कलंजं

भक्षयेदि'त्यादौ नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थत्वाभावेन धात्वर्थभक्षणादेरनुयोगितयाऽन्वयेऽपि न क्षतिः। नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिहाराद्भवति, तादृशसमभिहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते। एवं च नञर्थाभावेऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम्। एवं च न पचति चैत्रः, चैत्रस्य न धनम् इत्यादौ पाककृतिचैत्रस्वत्वाद्यभावस्य नञर्थस्य चैत्रधनादावन्वयबोधोपपत्तये घटो न पट इत्यादौ नञर्थघटादिभेदस्यान्वयबोधोपपत्तये च तदावश्यकम्। राजपुरुष इत्यादिसमासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्य न भेदान्वयबोधः। किन्तु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदोपस्थाप्यराजसम्बन्ध्यादेरभेदान्वयबोध एवेति न दोषः।एवं मुखश्चन्द्र इत्यादिरूपकस्थलेऽपि चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया चन्द्रादिसदृशाभेदान्वयबोध एव, न तु सादृश्यादिसंबंधेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचारः॥ सुप्तिङ्भेदेन द्विधा विभक्तय उक्तास्तत्र सुपः प्रथमाद्याः सप्त, संख्यासम्बोधनातिरिक्तसुबर्थः प्रकृत्यर्थविशेष्यतयैव भासते। संख्या सम्बोधनं च प्रकृत्यर्थे विशेषणविधयान्वयिनी। यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति, तत्र प्रथमान्तस्य विशेष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतयैव भासते। संख्यावाचकानामेकवचनादीनामेकत्वाद्यवच्छिन्नायां शक्तिः, शक्तता च सुत्व,औत्वजस्त्वादिना बोधकत्वं तु सर्वत्र विस-

र्गाद्यादेशानामेव । संख्यायाश्च प्रकृत्यर्थे पर्याप्तिसम्बन्धेनैव विशेषण-त्वम् । संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित्प्रतीयन्ते । यथा—सम्पन्नौ व्रीहियवावित्यादौ । विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तर-विभक्त्युपास्थाप्या च संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति । यथा--शतमेकं, द्वे शते, त्रीणि शतानीत्यत्र शतत्वादौ एकत्वद्वित्व-बहुत्वानामन्वयः । अत एव च एकशतद्विशततात्पर्येण न शतानीति प्रयोगः । दशादिशब्दा इव शतादिशब्दा अपि संख्यावच्छिन्नवा-चका एव, न तु धर्मिविशेषणतानापन्नसंख्यावाचकाः, तदुत्तरप्रथमा विभक्तिः साधुतामात्राय, नित्यबहुवचनान्ताऽब्दादिशब्दपरं बहुवचन-मपि क्वचिन्निरर्थकमेव, एकव्यक्तिमात्रतात्पर्येण प्रयोगे बहुत्वान्वये योग्यताविरहात्, एकवचनप्रयोगे चासाधुत्वात् ॥ आख्यातैक-वचनस्यापि संख्यार्थकत्वन्नास्ति, घटोस्तीत्यादौ सुबेकवचनादेव संख्याबोधसम्भवात्, चैत्रेण दृष्टो घट इत्यादिस्थलानुरोधेन तस्य तद्बोधकताया आवश्यकत्वात् । आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकं, चैत्रो मैत्रश्च गच्छतः, चैत्रो मैत्रो देवदत्तश्च गच्छन्तीत्यादिद्वित्वबहुत्वबोधकसुपोऽभावात् । चैत्र व्रजेत्यादौ एकत्वादिसंख्यावत् सम्बोध्यत्वमपि प्रथमार्थः । तच्च क्रियाकरणाय वक्त्रभिप्रेतत्वं वक्तृनिष्ठविलक्षणबोधविशेष्यत्वं वा । तथा च—तादृशसम्बोध्यत्ववांश्चैत्रोऽनुमतव्रजनवानित्याकारस्तत्र बोधः ॥ द्वितीयायाः कारकविभक्तयस्तदितरविभक्तयश्चेति द्विधा-यासामर्थौ धात्वर्थे प्रकारीभूय भासते, ताः कारकविभक्तयः ।

यथा—ग्रामं गच्छतीत्यत्र द्वितीयार्थः संयोगो वृत्तित्वं वा गम्धात्वर्थे प्रकारीभूय भासते इति द्वितीया कारकविभक्तिः । कारकविभक्तिषु मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोः कर्तृकर्मवाचकपदसमभिव्याहृतलकृत्तद्धितसमासैरनभिधानमेव तृतीयाद्वितीयादिनियामकं, लादीनां तदनभिधायकत्वन्तु तत्तात्पर्यशून्यत्वमेव।तथा च—चैत्रेण पक्ष्यत इत्यादावाख्यातस्य कर्तृतात्पर्यकतृतीया असाधुरेवेति संक्षेपः । तत्र कर्मत्वं द्वितीयार्थः । तच्च क्रियाजन्यफलशालित्वम् । तत्र क्रिया धातुत एव लभ्यते, जन्यजनकभावस्य च 'अनन्यलभ्यो हि शब्दार्थ' इति न्यायाद्विनैव पदार्थत्वं संसर्गमर्यादया भानं संभवतीति प्राचीनमते फलमात्रं कर्मप्रत्ययार्थः । नव्यमते तु फलस्यापि धात्वर्थत्वात्फलान्वयिनी वृत्तिरेव द्वितीयार्थः । वृत्तिराधेयता चेत्यनर्थान्तरम् । कर्माख्यातस्यात्मनेपदस्यापि कर्मत्वमेवार्थः । तच्च फलमेव। तत्र कर्त्राख्याते फलं व्यापारे विशेषणम्, फले च द्वितीयार्थवृत्तित्वान्वयः । कर्माख्याते फले व्यापारो विशेषणम्, फलमाख्यातार्थे आश्रयत्वे, तच्चाश्रये कर्मणीति, ग्रामं गच्छति चैत्र इत्यादौ ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इति बोधः । चैत्रेण गम्यते ग्राम इत्यत्र तृतीयार्थस्तत्कर्तृत्वम् । तस्य धात्वर्थे स्पन्दलक्षणे व्यापारे, शेषमुक्तवत् । जन्यत्वादिः संसर्गः, तथा च—चैत्रवृत्तिकृतिजन्यो यः स्पंदस्तज्जन्यसंयोगाश्रयतावान् ग्राम इति बोधः । चैत्रेण त्यज्यते ग्राम इत्यत्र संयोगस्थाने विभागपदं देयम्।चैत्रो न गच्छतीत्यादौ प्रागुक्तनञ्नियमानुसारेण नञर्थाभावे क्रियान्वयः । तस्य

च चैत्रे, तथा च—ग्रामवृत्तिसंयोगजनकक्रियाभावाश्रयतावांश्चैत्र इति सर्वत्र प्रथमान्तमुख्यविशेष्यकः शाब्दबोधः । वैयाकरणास्तु ग्रामं गच्छतीत्यादौ ग्रामनिष्ठसंयोगानुकूलं चैत्रकर्तृकं वर्त्तमानं गमनम्, इति क्रियामुख्याविशेष्यकं बोधमाहुः । चैत्रेण सुप्यते इत्यादौ फलस्याभावादात्मनेपदार्थो न भासते, तथा च चैत्रवृत्तिकृतिजन्यः स्वाप इत्येवं बोधः । ब्राह्मणाय धनन्ददातीत्यादौ स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः, धनम्प्रतिगृह्णातीत्यादौ स्वस्वत्वध्वंसजनकेच्छारूपस्वीकारो धातोरर्थः, उभयत्र स्वस्वत्वे द्वितीयार्थाधेयत्वान्वयः । तण्डुलम्पचतीत्यादौ रूपपरावृत्तिजनकतेजःसंयोगो धात्वर्थः । ओदनम्पचतीत्यादौ ओदनादिपदस्य तन्निष्पादकतण्डुलादौ लक्षणा । ओदनं भुंक्ते इत्यादौ गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारो धात्वर्थः । उभयत्र फल एव वृत्तित्वान्वयः । गान्दोग्धि पय इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति । 'अकथितञ्चे'ति सूत्रेण धातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाविधानात् । तथा हि—तत्र विभागावच्छिन्नक्षरणानुकूलव्यापारो दुहेरर्थः, द्वितीयार्थश्च विभागान्वयिनी वृत्तिरेव, क्षरणरूपफले च प्रधानकर्मक्षीराद्यन्वितद्वितीयार्थवृत्त्यन्वयः । तथा च—गोवृत्तिविभागावच्छिन्नपयोनिष्ठक्षरणानुकूलव्यापारकर्त्ता मैत्र इति बोधः । दुह्यते गौः क्षीरमित्यादौ क्षरणजन्यविभागाश्रयत्वं गवादिनिष्ठमप्रधानकर्म-

त्वमाख्यातार्थः, 'अप्रधाने दुहादीनामि'त्यनुशासनात् । क्षीरवृत्तित्वस्य धात्वर्थक्षरण एवान्वयः । आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः । तथा च--विभागावच्छिन्नक्षीरानिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्याकारको बोधः। पौरवं गां याचते' भिक्षते वा इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः । गवाद्यन्वितद्वितीयार्थो विषयत्वं दानेऽन्वेति । पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः । तस्या दानेन्वयः । चैत्रेण पौरवो गां याच्यते इत्यादावप्युक्तक्रमेण चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रय इत्यन्वयो बोध्यः । गां व्रजं रुणद्धीत्यादौ देशांतरसंचारानुत्पादप्रयोजकव्यापारो धात्वर्थः । अनुत्पादे गोवृत्तितान्वयः । देशविशेषणभेदे व्रजमिति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः । गुरुं धर्मं पृच्छति, शिष्यं धर्मं ब्रूते इत्यादौ च जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः, ज्ञाने गुरुवृत्तित्वस्यान्वयः । ब्रूञश्च ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दोर्थः।ज्ञाने शिष्यवृत्तित्वस्यान्वयः। उभयत्र शब्दे च धर्मविषयकत्वस्यान्वयः । अजां ग्रामन्नयतीत्यादौ, ग्रामं भारं वहतीत्यादौ च उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापाररूपं प्रापणं धातोरर्थः । तत्र क्रियारूपे फले अजाभारादिवृत्तित्वान्वयः । संयोगरूपफले च ग्रामादिवृत्तित्वस्यान्वयः । तथा च-ग्रामवृत्तिसंयोगजनकाजादिवृत्तिक्रियानुकूलपारानुकूलकृतिमानित्यन्वयबोधः । नीयते अजा ग्राममुह्यते भारो ग्रामं चैत्रेण इत्यादावुत्तरसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थः, तत्र च धात्वर्थस्य तादृशव्यापारस्य

जन्यतासम्बन्धेन, तस्य चाश्रयतासम्बन्धेन अजाभारादिरूपप्रधानकर्मण्यन्वयः। ग्रामादिवृत्तित्वान्वयस्तु संयोग एव। एवं च चैत्रकृतिजन्यो यः संयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवानजादिरित्यन्वयबोधः। चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियाश्रयतावानजादिरित्याकारको वा बोधः। अजां ग्रामं यापयति, शिष्यं शास्त्रं ज्ञापयति, ब्राह्मणमन्नम्भोजयति, यजमानं मंत्रं पाठयति, घटं जनयति, नाशयतीत्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाजादिपदोत्तरद्वितीयाया मुख्यभाक्तसाधारणं कर्तृत्वमेवार्थः, 'गतिबुद्धी'-त्यादिसूत्रेण कर्तुः कर्मसंज्ञाविधानात्। गतिज्ञानोत्पत्त्यादिनिरूपितं कर्तृत्वं चाश्रयत्वमेव। गलाधःसंयोगानुकूलक्रियानुकूलव्यापाररूपभोजनकण्ठताल्वाद्यभिघातरूपपाठनिरूपितं च तदनुकूलकृतिमत्त्वं नाशनिरूपितं च प्रतियोगित्वम्। तस्य च निरूपकतासम्बन्धेन धात्वर्थेऽन्वयः। नव्यमते च यत्राश्रयत्वं कर्तृत्वं तत्राधेयत्वं द्वितीयार्थः। यत्रानुकूलकृतिमत्त्वं तत्र कृतिजन्यत्वं, यत्र प्रतियोगित्वं तत्रानुयोगित्वं, तेषां चाश्रयतासम्बन्धेनैव धात्वर्थेऽन्वयः। अनुकूलव्यापारो णिजर्थः, कर्तृत्वं व्यापारश्च पृथङ् णिजर्थः, विशिष्टबोधस्त्वन्वयलाभात् इति वा। गत्यर्थादिभ्योऽन्यत्र णिच्प्रत्ययप्रकृतिधात्वर्थकर्तृवाचकपदान्न द्वितीया, तादृशकर्तुः कर्मत्वातिदेशाविषयत्वात्। तेन पाचयत्योदनं सहायेनेत्यादय एव प्रयोगाः, न तु पाचयत्योदनं सहायमित्यादयः। केचित्तु पाकादिकर्तुः पाकादि-

कर्मत्वविरहेऽपि ण्यन्तसमुदायस्यापि धातुत्वेन तत्कर्मतया सहायादेः पाचयत्योदनं सहायमित्यादयः प्रयोगा अपि साधवः, अत एव 'अजिग्रहत्तं जनको धनुस्तत्' इत्यादयो भट्टिप्रयोगाः इत्याहुः । तन्नेति वैयाकरणाः । अजा ग्रामं याप्यते चैत्रेणेत्यादौ चैत्रकर्तृक-व्यापारनिर्वाह्यं यद्ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वं तदाश्रयः अजा इति बोधः । ग्रामो याप्यते, अर्थो बोध्यते इत्यादौ फलं विषयत्वादिरूपं च मुख्यभाक्तसाधारणं कर्मत्वमेवाख्या-तार्थः । फलव्यापारयोः पृथग्धात्वर्थतामते आश्रयत्वमेवाख्याता-र्थः । धात्वर्थव्यापारविशेष्यतया तादृशाश्रयत्वविशेषणतया च धात्वर्थफलस्य भानम् । ण्यर्थव्यापारस्य जन्यतासम्बन्धेनैव, धात्व-र्थक्रियाज्ञानादिविशेषणत्वं पूर्ववदेव । ज्ञानादिरूपतविषयकवस्त्व-भिधायकधातुसमभिव्याहृतद्वितीयायाः प्राचीनमते निरूपक-तासम्बन्धेन धात्वर्थान्वयिविषयत्वमर्थः । तत्र प्रकृत्यर्थस्याधे-यतासम्बन्धेनान्वयः । नवीनमते विषयित्वमर्थः । तत्र च प्रकृत्य-र्थस्य निरूपितत्वसम्बन्धेन, तस्य च धात्वर्थे आश्रयतासम्बन्धेना-न्वयः। घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव, विषयि-त्वादौ च द्वितीयाया लक्षणैव, न तु शक्तिरिति साम्प्रदायिकाः । चैत्रेण ज्ञायते घट इत्यादौ कर्माख्यातस्थले आख्यातेन घटादौ धात्वर्थनिरूपितविषयत्वं बोध्यते। चाक्षुषाद्यवच्छिन्नवाचकदृश्यादि-समभिव्याहृतद्वितीयाया लौकिकविषयित्वम्, तादृशकर्माख्यातस्य लौकिकविषयत्वमर्थः । पुष्पं जिघ्रतीत्यादौ तु घ्राधातोर्गन्धलौकिक-

प्रत्यक्षत्वं शक्यतावच्छेदकं, तत्समभिव्याहृतद्वितीयायाश्चाधेयत्वमेवार्थस्तस्य च व्युत्पत्तिवैचित्र्येण गन्धादिरूपधात्वर्थैकदेशेनान्वयः। एवं च पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावानित्याकारकः शाब्दबोधः। अनुमित्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा विषयताविशेषो द्वितीयार्थः। इच्छार्थकधातुस्थले मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयाद्यर्थः। स एव च सुखमिच्छतीत्यादौ द्वितीयाद्यर्थः।ग्राममिच्छतीत्यादौ ग्रामादिपदं ग्रामस्वत्वादिपरम्।पाकं चिकीर्षतीत्यादौ सनो धात्वर्थविशेष्यकेच्छावाचित्वात्कृतिविशेष्यकेच्छा चिकीर्षापदार्थः। सा च पाककृतिर्भवत्वितीच्छैव, पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते, न त्विच्छाया विषयत्वरूपं कर्मत्वं, गृहस्थितीच्छामादाय गृहं तिष्ठासतीति प्रयोगापत्तेः। कर्मप्रत्ययस्थलेपि धात्वर्थविशेषितैवेच्छा सनूप्रत्ययेन प्रत्याय्यते। तत्कर्मत्वमेव कर्माख्यातार्थः। तच्च धात्वर्थकर्मतया तद्विषयत्वम्,सुबन्तोत्तरेच्छार्थक्यच्काम्यजंतस्य धातोः सन्नन्तधातुवन्न सकर्मकता,तदन्तर्गतप्रातिपदिकस्यैव कर्मबोधकतयेच्छायाः कर्माकांक्षाविरहात्। भृत्यं पुत्रीयतीत्यादौ तु पुत्रमिवाचरतीत्यस्य, पुत्रं यथा व्यवहरति तथा व्यवहरतीत्येवार्थः। व्यवहारश्च प्रतिपालनादिरूपः। एवं च पुत्रीयतीत्यत्र पुत्रकर्मकव्यवहारतुल्यव्यवहारकर्त्तेत्यर्थः। आचारसदृशाचार एव क्यचोऽर्थः। प्रथमाचारे कर्मतासम्बन्धेन पुत्रादेरन्वयः। द्वितीये चाचारे भृत्यस्य कर्मतया क्यजन्तस्य सकर्मकता। कुट्यां प्रासादीयतीत्यादौ

प्रासादाधिकरणकाचारतुल्याचारः क्यजन्तार्थः। स चावस्थानरूप एवेत्यकर्मकः। हंसायते, हंसतीत्यादौ क्यङन्तक्विबन्तधातुरप्यकर्मकः। तत्र हंसादिकर्तृकाचारतुल्याचारस्य गमनादिरूपस्य क्यङन्ताद्यर्थत्वेपि गम्यादिप्रतिपाद्यतावच्छेदकसंयोगादिरूपत्वानवच्छिन्नस्यैव तदर्थत्वोपगमात्। कृत्यर्थकधातुयोग इष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयताविशेष एव कर्मत्वं द्वितीयादेरर्थः, न तु विषयतामात्रम्। तण्डुलपाकं करोतीत्यत्र चिकीर्षाजन्यतावच्छेदकः क्रियायामुद्देश्यताख्यो विषयताविशेष एव द्वितीयार्थः कृतौ भासते। तेन तण्डुलपाकत्वप्रकारककृतेस्तण्डुलविषयत्वेपि पाकदशायां तण्डुलं करोतीत्यादिको न प्रयोगः। पाकदशायामोदनं करोतीत्यादौ द्वितीयायामनुकूलत्वे लक्षणा। वर्द्धमानस्तु उक्तस्थले धातुना उत्पत्त्यनुकूला कृतिरुच्यते, इति तत्रौदनस्य मुख्यमेव कर्मत्वम्। अत एव यत्र कृतिमात्रं धात्वर्थः तत्र न द्वितीया। यथा--घटाय यतते इत्यादावित्याह। कर्म त्रिधा—निर्वर्त्यं, विकार्यं प्राप्यं च। तत्र प्रकृतिवाचकपदसमभिव्याहाराभावे क्रियानिष्पाद्यमाद्यम्। यथा—घटङ्करोति, तण्डुलं पचति॥ विकार्यं च प्रकृतिविकृतिवाचकपदसमभिव्याहारे सति भवति, तद्द्विधा—प्रकृतिनाशपूर्वकं तदनाशपूर्वकं च। काष्ठं भस्म करोति, तण्डुलानोदनं करोति इत्याद्यमेकम्। सुवर्णं कुण्डलंकरोतीत्यादि द्वितीयम्॥ क्रियाकृतविशेषाभावशालि प्राप्यम्। यथा—ग्रामङ्गच्छति इति। एवं च तण्डुलानोदनम्पचतीत्यादौ प्रकृ-

तिकर्मोत्तरद्वितीयाया नाशकत्वमर्थस्तण्डुलाद्यन्वितं नाशकत्वं च पाके-न्वेति। विकृतिकर्मोत्तरद्वितीयायाश्च उत्पादकत्वमर्थः, ओदनाद्यन्वि-तस्य तस्य नाशकत्वविशिष्टे पाकेऽन्वयः। नाशे चोत्पत्तेः प्रयोजकत्व-मुद्देश्यविधेयभावमहिम्ना नियमतो भासते। काशान्कटं करोतीत्यादौ काशादिपदोत्तरद्वितीया कृतौ उपादानीयविषयताविशेषमेव बोध-यति, काशाद्युच्छेदकतायास्तत्र बाधात्। "अधिशीङ्स्थासां कर्म"-त्यादिना यत्राधारस्य कर्मसंज्ञा तत्राधारत्वमाधेयत्वं वा द्विती-यार्थः। कालाध्वनोरत्यन्तसंयोगे व्यापकत्वमधिकरणतैव वा द्विती-यार्थः। मासादिपदप्रवृत्तिनिमित्तधर्मे चैत्राध्ययनाधारताया व्याप्य-त्वस्य शब्दादलाभेऽप्यर्थतस्तल्लाभः। दण्डं विना न घट इत्यादौ विनापदार्थोऽभावस्तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयिप्रति-योगित्वमनुयोगित्वं वार्थः। विनार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासम्बन्धेनान्वयः। तथा च—दण्डप्रतियोगिकाभावप्रयोज्यो घटाभावः, दण्डं विना न घट उत्पद्यते इत्यत्र दण्डाभावप्रयोज्यो-त्पत्त्यभाववान् घट इति बोधः, विना वातं वृक्षः पतित इत्यादौ विनापदार्थस्याभावस्याश्रयतासम्बन्धेन वृक्षेन्वयाद्वाताभावविशिष्टो वृक्षः पतित इति शब्दतो लभ्यते। पतनेनुभवसिद्धो वातजन्यत्वा-भावलाभश्चार्थः। पुत्रं विना गत इत्यादौ पुत्रादिपदं लक्षणया पुत्रागमनादिपरं, विनापदबोध्यतदभावश्च समानकालीनत्वादिसंबन्धेन गमनेन्वेति, विनासमानार्थकयोर्ऋतेन्तरेणेतिनिपातयोरपि दर्शितैव रीतिः। एवं विनायुक्ततृतीयापञ्चमीस्थले मर्यादाभिविध्यर्थकयाव-

च्छब्दयोगेपि द्वितीया दृश्यते। तत्र मर्यादार्थको यावच्छब्दः-दशमीं यावत्पूजेत्यादौ। मर्यादा सीमा—कालरूपा देशरूपा च। अत्र च प्रागभावो यावत्पदार्थः, द्वितीयार्थः प्रतियोगित्वमनुयोगित्वं वा, तत्र तत्प्रकृत्यर्थदशम्या अन्वयः। तावता दशमीप्रतियोगिकप्रागभावलाभः। तस्य स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासम्बन्धेन पूजारूपक्रियायामन्वयः। देशरूपा सीमा च—काशीतः कौशिकीं यावद्यातीत्यादौ, तत्र कौशिक्याः गमनसीमात्वं प्रतीयते। तच्च काशीपूर्वकौशिकीपश्चिमदेशव्यापकगमनानधिकरणत्वम्। यावत्पदेन च कौशिक्यनधिकरणकत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते। तत्र द्वितीयार्थोऽवधित्वमवधिमत्त्वं वा प्रतीचीत्याद्यन्वयि, निष्कर्षः पूर्ववत्स्वयमूहनीयः। अभिविध्यर्थो यावच्छब्दः—कार्त्तिकमारभ्य चैत्रं यावच्छीतं भवतीत्यादौ, काशीतः पाटलिपुत्रं यावद्वृष्टो देव इत्यादावाभिविधिस्तत्पर्यन्ताभिव्याप्तिः। एवं च प्रथमे कार्त्तिकपूर्वकालोत्तरचैत्रोत्तरकालपूर्वकालव्यापकत्वं चैत्रोत्तरकालाऽवृत्तित्वसहितं शीतभवने, द्वितीये च काशीपश्चिमदेशपूर्वपाटलिपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ, यावता प्रत्याय्यते। यावच्छब्दसमानार्थकाङ्शब्दस्थलेपि दर्शितैव रीतिरवसेया, तद्योगे पञ्चमी साधुः। यज्ञमनुप्रावर्षदित्यादौ जन्यत्वमनुशब्दार्थः। तत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञान्वितस्यान्वयः। जन्यतायाश्चाश्रयत्वसम्बन्धेन वृष्टावन्वयः। अन्वर्जुनं योद्धार

इत्यत्रापकर्षरूपहीनत्वमनुशब्दार्थः । अर्जुनावधिकत्वं द्वितीयान्तार्थ-स्तस्य चापकर्षेऽन्वयः । वृक्षम्प्रति वियोततते विद्युत्, मातरम्प्रति साधुः, यो मां प्रति स्यात्, वृक्षंवृक्षं प्रति सिंचतीत्यादौ "लक्षणेत्थंभूते"त्यादिसूत्रानुशिष्टकर्मप्रवचनीयसंज्ञकप्रत्यादिशब्देषु—प्रथमे, परिचायकत्वरूपं लक्षणत्वं परिचेयत्वरूपं लक्ष्यत्वं वा कर्मप्रवचनीयार्थः । वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद्वृक्षस्य परिचायकता । द्वितीयार्थश्चाधेयत्वं निरूपितत्वं वा । द्वितीये,साधुत्वं प्रियकारित्वं, साधुत्वघटकक्रियान्वयी सम्बन्धः कर्मप्रवचनीयार्थः, सम्बन्धान्वयि प्रतियोगित्वं तन्निरूपकत्वं वा द्वितीयार्थः । तृतीये, भागः स्वत्वाश्रयः प्रत्ययार्थः, तदन्वयी संबंधो द्वितीयार्थः । इत्थं चास्मत्सम्बन्धी यो भागः स्यादिति बोधः । चतुर्थे, कर्मण्येव द्वितीया, षत्वबाधएव संज्ञाफलं, प्रतिश्च निरर्थकः । द्विरुक्तान्वये तात्पर्यबलाच्च सेचनकर्मत्वे वृक्षादेर्व्यापकत्वं संसर्गतयैव भासते । त्वां च मां चान्तरेत्यादौ द्वितियाया निरूपितत्वमर्थः । तस्यान्तरापदार्थतावच्छेदकमध्यत्वेन्वयः ॥

इति द्वितीया विभक्तयः ।

---

कारकविभक्तितृतीयायाः क्रियान्वयि कर्तृत्वं करणात्वं चार्थः । कर्तृत्वं च मुख्यं क्रियानुकूलकृतिरेव, सा च कर्त्राख्याते चैत्रः पचतीत्यादौ क्रियाविशेष्यतयाख्यातेन प्रतिपाद्यते । चैत्रेण पच्यते, शय्यत इत्यादिकर्मभावाख्यातस्थले च क्रियायां विशेषणतृतीयया सा प्रत्याय्यते । अचेतनकाष्ठस्थाल्यादेरपि कर्तृत्वविवक्षया

काष्ठं पचतीत्यादिवत्काष्ठेन पच्यत इति प्रयोगात्। तत्र व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे संकर्तृकत्वे वा तृतीयाया लक्षणा। एवं चैत्रेण ज्ञायत, इष्यत इत्यादावाश्रयत्वरूपे कर्तृत्व आधेयत्वरूपे कर्तृमत्त्वे वा, नश्यते घटेनेत्यादौ प्रतियोगित्वरूपे कर्तृत्वेनुयोगित्वरूपे कर्तृमत्त्वे वा लक्षणा। कर्तृपदमपि व्यापारादिमत्यचेतनादौ स्वारस्याभावाल्लाक्षणिकमेव। अत एव च कृञो यत्नवाचकत्वम्। तथा चैत्रेण पच्यत इत्यादावपि कृतिविषयत्वमेव तृतीयार्थः। स्वनिरूपकजन्यत्वं विषयतायाः सम्बन्धमध्येन्तर्भावनीयम्। काष्ठेन पचतीत्यादौ करणत्वं तृतीयार्थः, तच्च कर्तृव्यापाराधीनव्यापारवत्कारणत्वम्। तत्र तृतीयायाः शक्तिद्वयम्, कर्त्रसमभिव्याहारस्थले व्यापारवत्कारणत्वमात्रं प्रतीयते, कर्तृसमभिव्याहारस्थले च व्यापारे तद्व्यापाराधीनत्वमपीति सामञ्जस्यात्। लिङ्गज्ञानस्यानुमितिकरणतामते धूमेन वह्निमनुमिनोतीत्यादौ धूमादिपदं तज्ज्ञानपरम्, पर्वतो धूमेन वह्निमानित्यादौ क्रियायोगाभावाद्धेतुतृतीयैव, तत्र ज्ञापकज्ञानविषयत्वं हेतुत्वं ज्ञानज्ञाप्यत्वरूपं वा हेतुमत्त्वं तृतीयार्थः। जाड्याद्बद्धो जाड्येन वेत्यत्र जाड्यहेतुतावद्धूमाद्वह्निमान् धूमेन वेत्यादौ धूमादेर्वह्न्यादिज्ञानहेतुता प्रतीयते। हेतुत्वं च पूर्वोक्तम्प्रयोजकत्वमेव। केन हेतुना, कस्मै हेतव इत्यादौ तु हेतुशब्दस्य स्वरूपयोग्यपरत्वात्, विभक्तेः फलोपधानपरत्वान्न पौनरुक्त्यम्। सहार्थयोगेपि साहित्यप्रतियोगिवाचकपदात्तृतीया। पुत्रेण सहागत इत्यादौ आगमनसमानकालीनागमनादिकमेव सहशब्दार्थः। तस्य

कर्तृत्वादिसम्बन्धेन पुरुषादावन्वयः । 'इत्थंभूतलक्षण' इत्यनेन लक्षणवाचिपदात्तृतीयाऽनुशिष्यते । लक्षणत्वं चातद्व्यावृत्तत्वम् । तथा च जटाभिस्तापस इत्यादौ अजटव्यावृत्तिमांस्तापस इति बोधः । अतद्व्यावृत्तश्च धर्मो द्विविधः-विशेषणमुपलक्षणं च, विद्यमानं सद्व्यावर्त्तकं विशेषणम्, अविद्यमानं व्यावर्तकमुपलक्षणम् । एवं चातद्व्यावृत्तं यदि वर्तमानतया प्रत्याय्यते, तदा विशेषणत्वेन व्यपदिश्यते । यद्यवर्त्तमानत्वेन तदोपलक्षणत्वेन, यथा शिखया परिव्राजको वर्त्तते, यथा वा गुरुणा टीका, कुरुणा क्षेत्रम् । क्वचिच्च विद्यमानमप्यतद्व्यावृत्तं न्यूनाधिकवृत्तितयोपलक्षणमेवोच्यते । यथा—विद्यमानापि जटा तापस उपलक्षणम् । न तूपलक्ष्यतावच्छेदकशमदमादिवद्विशेषणमित्यलम् ॥

इति तृतीया विभक्तयः ।

---

ब्राह्मणाय गान्ददातीत्यादौ सम्प्रदाने चतुर्थी । तच्च क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वम् । एवं च ब्राह्मणायेत्यादौ ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्त्तेति बोधः । निरूपितत्वेन कर्तुरिच्छाविषयत्वं द्वितीयान्तार्थगोवृत्तित्वान्वयिधात्वर्थतावच्छेदकस्वत्वान्वयिचतुर्थ्यर्थः । स्वत्वजनकत्यागश्च ददात्यर्थः । शत्रवे भयन्ददातीत्यादौ जनयतीति भाक्तोर्थः । एवं चोत्पादकव्यापाररूपे धात्वर्थे भयरूपं कर्म, तद्योगितयोद्देश्यत्वात्तच्छत्र्वादेस्सम्प्रदानत्वम् । युद्धाय संनह्यत इत्यादौ न सम्प्रदानचतुर्थी, अपि त्वेधानाहर्तुं व्रजतीत्यर्थे एधेभ्यो व्रजतीत्यत्रेव युद्धं

कर्तुं सोढुं वा सन्नह्यत इत्यर्थविवक्षया 'क्रियार्थोपपदे'ति सूत्रेण चतुर्थी। तथा चाहरणकरणसहनाद्युद्देश्यकत्वं तादृशचतुर्थ्यर्थ इत्यवधेयम्। रजकस्य वस्त्रन्ददातीत्यत्र ददातिर्न त्यागार्थकोऽपि तु प्रकृते रजककर्तृकनिर्णेजनेच्छाप्रकाशको व्यापारः। तदेकदेशे कर्तृत्वे रजकस्य सम्बन्धविवक्षायां शैषिकी षष्ठी। हन्तुः पृष्ठन्ददातीत्यत्र तत्कर्तृकताडनानुमतिप्रकाशकव्यापार एव ददात्यर्थः। तदेकदेशे कर्तृत्वे हन्तुस्सम्बन्धविवक्षायां षष्ठी। एवं संवाहकस्य चरणन्ददातीत्यादावूहनीयम्। नारदाय रोचते कलह इत्यादौ प्रीतिजनकता रुच्यर्थः। तत्र चतुर्थ्यर्थ आश्रितत्वं प्रीतावन्वेति, तादृशक्रियाश्रयतया कलहादेः कर्तृता। पुष्पेभ्यः स्पृहयति, पुत्राय क्रुध्यतीत्यत्र चतुर्थ्यर्थो विषयित्वं, तस्येच्छाकोपरूपाक्रियायामन्वयः, क्रोधस्य सविषयकत्वात्। एवं शत्रवे द्रुह्यतीत्यादौ द्रोहः अहितेच्छा, अहितभागितयेच्छाविषयता, तन्निरूपकत्वं चतुर्थ्यर्थ इच्छान्वयी अहितान्वय्याधेयत्वं वा। ईर्षा परोत्कर्षगोचरो द्वेषः। असूया गुणिनि दोषाविष्करणम्। विषयताविशेषस्तत्र चतुर्थ्यर्थः। विप्राय शतं धारयतीत्यादौ द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्यादृष्टविशेषवत्त्वमेव धारयतेरर्थः, तद्घटकदानान्वयिकर्तृत्वं तत्र चतुर्थ्यर्थः। यूपाय दारु इत्यादौ तादर्थ्ये चतुर्थी। इच्छाधीनेच्छाविषयव्यापाराश्रयत्वं चतुर्थ्यर्थः। प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयतयान्वयः। एवं रन्धनाय स्थालीत्यादावूह्यम्। एधानाहर्तुं व्रजतीत्यर्थे एधेभ्यो व्रजतीत्यत्र चतुर्थ्या एधकर्मकाहरणप्रयो-

जनकत्वम् । अश्वाय घास इत्यादावश्वपदस्याश्वभोजनपरतया तादर्थ्यचतुर्थ्येव । नमःस्वस्त्यादियोगेपि चतुर्थी । नमःशब्दार्थस्त्यागो नमस्कारश्च । एषोर्थः शिवाय नम इत्यादौ त्यागार्थकः । चतुर्थ्या च प्रकृत्यर्थस्य शिवादेरुद्देश्यत्वं प्रत्याय्यते, स विषयिताविशेष एव चतुर्थ्यर्थः, तत्र च निरूपितत्वसम्बन्धेन शिवादेरन्वयः । नमःपदार्थत्यागस्य च विषयिताविशेषसम्बन्धेन द्रव्येन्वयः । द्रव्यस्यैव वा विशेष्यतया भासमानत्यागे विषयिताविशेषसम्बन्धेनान्वयः । न च प्रथमान्तपदार्थस्य मुख्यविशेष्यतानियमः, भूतले न घट इत्यादौ निपातार्थस्यापि तथात्वात्, इंद्राय स्वाहा, तुभ्यं स्वधेत्यादौ अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागबोधकस्वाहापदपित्रुद्देश्यकत्यागबोधकस्वधापदयोरपि नमःपदवद्देशनादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागवाचकता । नतिरूपो नमःपदार्थश्च स्वापकर्षबोधनानुकूलः स्वीयव्यापारः, चतुर्थ्या चापकर्षान्वय्यवधित्वमवधिमत्त्वं वा प्रत्याय्यते । स्वः, समुच्चारयिता । तथा च चैत्राद्युच्चारितान्नमो हरय इत्यादिशब्दाद्धर्यवधिकचैत्रापकर्षबोधानुकूलश्चैत्रीयव्यापार इत्याकारको बोधः, नारायणं नमस्करोतीत्यादौ कृधातुनैव व्यापारबोधात् । अत्र च स्वापकर्षावधित्वप्रकारकबोधविषयतामात्रं निपातार्थः।अत्र स्वं,समभिव्याहृतः कर्त्ता । तथा च तादृशबोधविषयताप्रयोजकव्यापारानुकूलकृतिमानिति समुदायाधीनो बोधः, तादृशविषयताश्रयतया नारायणादेः कर्मत्वम् । नारायणो नमस्क्रियत

इत्यादौ निपातार्थफलं धात्वर्थव्यापारे विशेष्यतयैव भासते, तदन्वितमाश्रयत्वं कर्माख्यातादिना प्रत्याय्यते । स्वस्ति भवत इत्यादावाशीः स्वस्त्यर्थः । सा च परहितविषयकस्वेच्छा, स्वं, समुच्चारयिता । हितान्वयी सम्बन्धश्चतुर्थ्यर्थः । एवं च भवदीयहितविषयिणी मदीयेच्छेति बोधः । कल्याणाद्यर्थकोपि स्वस्तिशब्दः, स्वस्त्यस्तु मह्यमित्यादौ, तत्रापि चतुर्थ्यर्थः सम्बन्धः स्वस्त्यर्थान्वयीत्यलम् ॥

इति चतुर्थीविभक्तयः ।

---

वृक्षात्पर्णं पततीत्यादौ पंचम्या अपादानत्वं च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम् । पर्णादेर्वारणाय भूतान्तं क्रियाविशेषणं, भेदप्रतियोगितावच्छेदकत्वे विभागजनकत्वे च पञ्चम्याः शक्तिद्वयम् । भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासम्बन्धेनान्वयः । प्रतियोगितावच्छेदकत्वं विभागजनकत्वं चाश्रयत्वसम्बन्धेन क्रियायामन्वेति । एवञ्च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकतन्निष्ठविभागजनकपतनाश्रयः पर्णमित्याद्याकारक उक्तस्थले बोधः । वृक्षाद्विभजत इत्यादावपि वृक्षावधिकत्वं विभागे प्रतीयते, तत्रापादानतायाः अवधितारूपत्वात्, अवधित्वादिकं च स्वरूपसम्बन्धविशेषः । व्याघ्राद्बिभेति, दस्युभ्यो रक्षतीत्यादौ भयश्च परतोऽनिष्टसम्भावना, त्राणं चानिष्टनिवृत्त्यनुकूलो व्यापारः । पंचम्यर्थस्तत्र प्रयोज्यत्वम्, तच्च निरुक्तधात्वर्थघटकानिष्टेन्वेति । यवेभ्यो गां वारयति,कूपादन्धं वारयतीत्यादौ वारणं क्रियाप्रतिषेधः । तस्याः प्रतिषेधः कर्तृत्वाभावानुकूलव्यापारः । यवादिपदोत्तरपं-

चम्या यवादिगतत्वेनेच्छाविषयफलकत्वं भक्षणादौ प्रत्याय्यते । इच्छा च भक्षणादिक्रिया कर्तृनिष्ठा तदर्थेन्तर्भावनीया । एवं चोक्तस्थले यव-कूपादिनिष्ठत्वेन गवान्धादीच्छाविषयो यो गलाधःसंयोगोत्तरदेशसं-योगादिर्गवान्धादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूल-व्यापारानुकूलकृतिमानित्याकारको बोधः । पण्डितात्पुराणं शृणोति उपाध्यायादधीते, अत्र प्रकृत्यर्थपण्डितादिकर्तृकोच्चारणाधीनत्वं पञ्चम्यर्थः । तस्य च श्रवणोच्चारणार्थविशेषज्ञानादिक्रियायाम-न्वयः । मृत्पिण्डाद्घटो जायत इत्यादौ 'जनिकर्त्तुरि' त्यनेनापादान-त्वम् । तत्र कारणत्वमेव प्रकृतित्वं, न विकारित्वमात्रम्, दण्डा-द्घटो जायत इत्यादिप्रयोगाणामपीष्टत्वात् । हिमवतो गङ्गा प्रभवतीत्यादौ प्रथमप्रकाश एव प्रभवत्यर्थः, पंचम्यर्थः सम्बन्धाधीनत्वं तादृशक्रियायामन्वेति । सम्बन्धे च हिमवदादि-प्रकृत्यर्थः । उपाध्यायादन्तर्द्धत्ते छात्र इत्यादौ अन्तर्द्धिरन्तर्द्धानम् स्वनिष्ठान्यकर्तृकदर्शनविषयताविरहोद्देश्यको व्यापारः । पञ्चम्याः अन्तर्द्धिघटकदर्शनान्वयिकर्तृतानिरूपकत्वमेवार्थः इत्युपाध्यायक-र्तृकदर्शनाविषयतायाः स्वनिष्ठो यो भावस्तदुद्देश्यकव्यापारकर्त्ता छात्र इति तत्रान्वयबोधः । गुणो द्रव्याद्भिन्न इत्यादौ 'अन्याराादि'ति सूत्रेणैव पञ्चमी । अन्यपदस्यान्यार्थकपरत्वादिति बहवः । वस्तु-तस्त्वन्योन्याभावीयप्रतियोगित्वरूपार्थविवक्षायां पञ्चमी । अर्जुनः क्रोशाल्लक्ष्यं विध्यति, अद्य भुक्त्वायं द्व्यहाद्भोक्ता इत्यादौ स्वाधिष्ठित-देशानन्तरक्रोशात्मकाध्वभागानन्तरदेशस्थं विध्यत्यर्जुन इत्यादि-

प्रथमस्थले बोधः, अनन्तरदेशस्थत्वं पंचम्यर्थः । भोजनकृत्यधिकरणैतद्दिवसानन्तरद्व्यहानन्तरदिनवृत्तिभोजनकृतिमानयमित्याकारको बोधश्चरमस्थले ॥

इति पञ्चमीविभक्त्यः ।

---

सम्बन्धविवक्षायां कारकविभक्त्यप्रसक्तेः 'शेषे षष्ठी'त्यनेन चैत्रस्येदमित्यादौ षष्ठी । चैत्रस्य द्रव्यमित्यादौ स्वत्वं घटस्य कारणम्, चैत्रस्य हस्त इत्यादौ निरूपितत्वावयवत्वादीनां सम्बन्धत्वेनैव षष्ठ्यर्थता, न तु विशिष्यशक्त्यानन्त्यप्रसंगात् । विशेषस्य स्वेतरसामान्यव्यावृत्तधर्मवत्त्वं निर्धारणम् । तच्च समुदितं न षष्ठ्यर्थः;सामान्यतन्निष्ठधर्मयोः स्वपदोपात्तत्वात्, किन्तु विशेषान्यत्वं व्यावृत्तं च विशेषस्तत्समभिव्याहृतक्षत्रियादिर्विशेष्यग्राह्यः। व्यावृत्तत्वं च भेदप्रतियोगित्वम् । तथा च नराणां क्षत्रियः शूरतम इत्यत्र क्षत्रियस्य नरविशेषतया षष्ठ्यर्थेन क्षत्रियान्यत्वेन विशिष्टस्य तत्प्रकृत्यर्थस्य नरस्य तादृशनरत्वावच्छिन्नाधेयत्वसंसर्गेण भेदेऽन्वयलब्धस्य क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य शूरतमे, शूरतमस्य च क्षत्रिये तादात्म्येनान्वय इति क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्ववच्छूरतमाभिन्नः क्षत्रिय इत्याकारकस्तत्र बोधः । इदन्तु बोध्यं—यत्रोद्देश्यविधेययोस्तादात्म्येनान्वयबोधसामग्री तत्रैव निर्द्धारणषष्ठ्या भेदप्रतियोगित्वमर्थः । यत्र तु सम्बन्धान्तरेण तत्रात्यन्ताभावप्रतियोगित्वमतो नराणां क्षत्रिये शौर्यमित्यादौ क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकस्यात्यन्ता-

भावस्यैव प्रतियोगित्वं शौर्यादौ प्रतीयते, न तु तादृशभेदस्य, नराणां क्षत्रिये रूपमित्यपि प्रयोगापत्तेः । नराणां मध्ये क्षत्रियः शूर इत्यादौ तु निर्द्धारणवाचिनो मध्ये इत्यव्ययस्य तदर्थकषष्ठ्या सह संभेदे हे चैत्रे त्यादाविव नान्यतरवैयर्थ्यम् ॥

इति षष्ठीविभक्तयः ।

---

नरेषु क्षत्रियः शूर इत्यादौ निर्द्धारणसप्तमीस्थलेऽप्युक्तदिशैवान्वयो द्रष्टव्यः। आधारसप्तम्या आधेयत्वमर्थः। तस्य क्रियायामन्वयः। आधाराधेयभावश्च न संयोगादिरूपसम्बन्धात्मकः। अपि तु पदार्थान्तरमेव। भूतले वर्त्तते घट इत्यादौ निरूपकत्वस्यैवाधारतारूपत्वेन निरूप्यत्वस्यैव सप्तम्यर्थत्वम्। अथ वा वृद्धातोरपि आधारत्वमेवार्थः। तन्निरूपकत्वमेव घटादेस्तत्कर्तृत्वम्, यद्यपि भुवि गच्छतीत्यादौ चैत्रक्रियाया भुवि बाधस्तथापि तत्र कर्तृघटितपरंपरासम्बन्धावच्छिन्नाधारताया एव सप्तम्यर्थत्वम्। अवच्छेद्यताविशेषोप्याधारसप्तम्यर्थः। यथा-वीणायां शब्दः, कर्णे शब्दः, वृक्षाग्रे कपिसंयोग इत्यादौ, एषु कारकतानिर्वाहाय भवतीत्यध्याहारः, क्रियां विनैव वा सप्तमी व्यवहारसिद्धा। चर्मणि द्वीपिनमित्यादौ "निमित्तात्कर्मयोग" इत्यनेन सप्तमी। निमित्तत्वं च क्रियाजनिका या विनियोज्यत्वेनेच्छा तद्विषयत्वम्। स्वविषयकतादृशेच्छाधीनत्वमेव। तत्र क्रियान्वयी सप्तम्यर्थः। तदेकदेशविषयतायां निरूपकत्वेन प्रकृत्यर्थान्वयः। चर्मादेर्घात्यव्याघ्रादेस्सम्बन्धश्च न सप्तम्यर्थः, अपि तु सप्तम्याः साधुत्वे स्वरूपसन्नपेक्षितः। गोषु दुह्यमानासु गत इत्यादौ 'यस्य च

भावेने'त्यनेन गवादिपदात्सप्तमी, दुह्यमानासु इति तु तद्विशेषणत्वात्सप्तमी । तत्र समभिव्याहृतदोहनादिक्रियैव सप्तम्यर्थः । तस्याश्च समानकालीनत्वादिकं क्रियान्तरे सम्बन्धः । तत्र वर्त्तमानार्थकक्तसमभिव्याहारस्थले समानकालीनत्वम् । दोग्धव्यासु गत इत्यादिभविष्यदर्थकक्तस्थले प्राक्कालीनत्वं, दुग्धासु गत इत्यादावतीतार्थक्तस्थले उत्तरकालीनत्वं सम्बन्धतया भासते । पाथसि पीते तृषा शाम्यतीत्यादावतीतार्थकक्तसमभिव्याहारात्कार्यकारणभावोपि सम्बन्धतया भासते इत्यादिकमूहनीयम् । गुणान्यत्वे सति सत्त्वादित्यादौ सतीत्यनन्तरं सत इत्यध्याहार्यम् । अन्यथा लक्षणीयक्रियाभावेनोक्तसूत्राविषयतया सप्तम्यनुपपत्तेः । तत्र चास्धातोरर्थः आधारता गुणान्यत्वाद्याधारतायाश्च सत्ताधारतायां तद्वन्निष्ठत्वं सन्बन्धतया भासत इति ॥

इति सप्तमीविभक्त्यः ।

---

धातुप्रकृतिकाश्च लकारक्तसन्यङ्णिच्प्रभृतयः प्रत्ययाः।केचिद्धात्वर्थार्थान्वितसाधकतमत्वं ब्रुवते । अर्थान्तरमनभिदधानाश्च केचिदाकांक्षानिर्वाहकतया प्रकृतिभिः स्वीयार्थबोधन एवोपकुर्वते । तत्र लडादिदशलकाराणां कर्त्तृत्वसामान्यमर्थः । तच्च प्रथमान्तपदोपस्थाप्ये विशेषणतयान्वेति । कर्तृत्वं च पचतीत्यादौ क्रियानुकूला कृतिरेव आख्यातवाच्या । रथो गच्छति, काष्ठम्पचतीत्यादौ च क्रियानुकूलव्यापाररूपे, जानातीत्यादौ सविषयकार्थधातुप्रकृतिकलकाराणामायत्वे रूपे कर्तृत्वे निरूढलक्षणा, कृतित्वजातेः

प्रवृत्तिनिमित्तत्वे लाघवात् । मीमांसकास्तु व्यापरत्वेनैव शक्तिः, पचतीत्यादावपि तेनैव रूपेण कृतिबोधोपगमात्, एवं चाचेतनेपि प्रयोगो मुख्य एवेत्याहुः । नश्यतीत्यादौ प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थः । कर्तृकर्मवत्कालविशेषेनुशिष्टा लडादयः कालविशेषमपि बोधयन्ति । तत्र लट्प्रत्ययस्य वर्त्तमानकाले शक्तिः, वर्त्तमानकालश्च तत्तच्छब्दप्रयोगाधिकरणकालरूपस्तत्तच्छब्दार्थः । लडादिप्रत्ययेन कृत्यादिरूपे व्यापारे एव वर्त्तमानत्वाद्यन्वयो बोध्यते । जानातीत्यादौ व्यापाराबोधकेन तेन क्रियायामेव, न तु लडार्थाश्रयत्वादौ । लृटो भविष्यत्त्वमर्थः । तच्च वर्तमानप्रागभावप्रतियोगित्वं, वर्त्तमानप्रागभवो लृडर्थः । प्रतियोगितासम्बन्धेनान्वयः । लुटोऽनद्यतनभविष्यत्त्वमर्थः । तच्च शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् । लुङोतीतत्वम् । तच्च वर्त्तमानध्वंसप्रतियोगित्वं, वस्तुतो वर्त्तमानध्वंस एव लुङाद्यर्थः । तस्य प्रतियोगितासम्बन्धेन कृत्यादावन्वयः । लङोतीतवदनद्यतनत्वमप्यर्थः । अतीतत्वमनुद्यतनत्वम् परोक्षत्वं च लिटोर्थः । परोक्षत्वं वक्तुः साक्षात्काराविषयत्वम् । केचित्तु स्वभिन्नकर्तृकत्वमेव परोक्षत्वमाहुः । बोपदेवाद्यास्तु लिटः परोक्षत्वं लङ्लुङ्लिटामनद्यतनत्वं च नाद्रियन्ते । लक्ष्लाभस्त्वविशेषेण प्राय उपलभ्यते 'व्यातेने किरणावालीमुदयनः' 'चक्रे सुबन्धुस्सुजनैकबन्धुः' इत्यादि । तथा च गच्छतीत्यत्र गमनानुकूला शब्दप्रयोगाधिकरणकालवर्तिनी या

कृतिस्तदाश्रय इति बोधः । एवं गमिष्यतीत्यत्र वर्त्तमानस्वरूपस्थाने भविष्यत्स्वरूपम्, गन्ते त्यत्रानद्यतनत्वसहितमपि निवेश्यम् । अगमदित्यत्रातीतस्वरूपम्, अगच्छादित्यत्रानद्यतनत्वसहितम्, जगामेत्यत्र परोक्षत्वेनापि सहितन्निवेश्यम् । लिङ् द्विधा—विधिलिङ्, आशीर्लिङ् च । आद्यस्य कृतिसाध्यत्वमिष्टसाधनत्वं बलवदनिष्टाननुबंधित्वं च । एवं च यजेतेत्यत्र यागः कृतिसाध्यः, इष्टसाधनम्, बलवदनिष्टाननुबंधी चेति । श्राद्धे भुञ्जीत भवानित्यादौ निमंत्रणं लिङर्थः । श्राद्धभोजनधर्मिकस्वकर्त्तव्यत्वधीजनकवाक्यप्रतिपाद्यो भवान् इति । धेनुं दद्यास्त्वमस्मभ्यम् इत्यत्र प्रार्थना लिङर्थः । धेनुकर्मकचैत्रसंप्रदानकदानत्वावच्छिन्नधर्म्मिका या युष्मत्कर्त्तव्यत्वप्रकारिका चैत्रेच्छा तद्विशेषीभूतदानस्यानुकूलकृतिमांस्त्वमिति । भिक्षां देहि त्वमर्थिभ्य इत्यादौ लोटोपि क्वचित् प्रार्थनार्थः । ह्रदो यदि धूमवान् स्यात् इत्यादौ धातोर्निरूढलक्षणया भेदोऽर्थः, तेन धूमवद्भेदाश्रयतावान् ह्रद इति । ह्रदो यदि धूमवान्स्यात्, वह्निमान्स्यात्, धूमवद्भिन्नो ह्रदो धूमव्यापकवह्निमद्भेदवान्, इति । अन्ये तु धूमवत्तापादकताकवह्निमत्तापत्तिविशेष्यो ह्रद इत्याहुः । यो ब्राह्मणायावगुरेत्तं शतेन यातयेत्, यः शतयातनाहेतुब्राह्मणावगोरणवान्, तदीयशतयातनं ब्राह्मणावगोरणजन्यमिति । ऋतौ स्वदारानुपेयात्, ऋतुकालावच्छेद्यत्वविशिष्टस्वप्रत्यवायजनकीभूताभावस्य प्रतियोगिस्वदारगमनमिति । पंच पंचनखान् भुंजीत, शशादिपंचभिन्नानां पंचनखानां भोजनं प्रत्यवायहेतुः । एवं याजनाध्यापनप्रतिग्रहैर्द्विजो

धनमर्जयेत्, याजनादिभिन्नैर्ब्राह्मणस्य धनार्जनं प्रत्यवाय-हेतुरिति सर्वत्र परिसंख्याविधौ द्रष्टव्यम् । पत्नी पचतु इत्यादौ लोटोऽनुज्ञार्थः । सा च कर्तुरिष्टत्वे सति वक्त्रनुमतत्वम् । तथा च चैत्रानुमतस्वेष्टस्य पाकस्य पत्नी कर्त्री इति । शूलं विश, विषं भुंक्ष्वेत्यादौ राजवाक्ये, त्वाज्ञा, राजानुमतस्वानिष्टहेतुशूलप्रवेश-कर्तृतावांस्त्वमिति । पर्वतमप्युत्पाटयानीत्यादौ समर्थना । सा च पराशक्यधर्मिकस्वशक्यत्वाध्यवसायः, स्वेतराशक्यं यत्पर्वतोत्पाट-नं तद्धर्मिकस्वशक्यत्वाध्यवसायवान् इति । क्वापि वक्त्राशंसनमपि, जीवतु भवान्, चैत्राशंसाविषयवर्त्तमानजीवनवांस्त्वम् इति । घटो नीलो भवतु, आशंसाविषयवर्त्तमाननीलोत्पत्तिमान् घट इति । आशीर्लिङो वक्त्राशंसनमेव लोड्वत् । लृङो व्याप्यक्रियया व्यापकक्रियापादनम्, तण्डुलं चेत्प्राप्स्यत्, ओदनमपक्ष्यत् इत्यत्र तंडुलप्राप्त्यभावप्रयुक्तो ओदनप्राप्त्यभाववान् इति बोधः। क्यच्काम्य-चोः इच्छार्थः, पुत्रीयति, पुत्रकाम्यतीत्यत्र पुत्रत्वेन पुत्रगोचरे-च्छाया आश्रयत्ववांश्चैत्र इति । आचारक्यच्क्यङ्क्विपां तु आचार-सदृशाचारोर्थः प्रागुक्तः । हेतुणिचः अनुकूलव्यापारो व्यापारमात्रं वाऽर्थः । चैत्रं भावयति,चैत्रोत्पत्त्यनुकूलव्यापारवान्, क्वापि ज्ञाना-नुकूलव्यापारोपि, कथकः कंसं घातयति इत्यादावभिनयादिरूपः । सनः कर्तुरिच्छार्थः । तदुत्तराख्यातस्याश्रयत्वे लक्षणा। सविषयार्थ-कप्रकृतिकाख्यातस्याश्रयत्वे लक्षणाया घटं जानामीत्यादौ क्लृप्तत्वात्। तथा च—पिपठिषतीत्यत्र पाठेच्छाश्रयश्चैत्र इति बोधः ॥ पौनःपुन्यं

यङः, तत्त्वं च तदानींतनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वम् । तथा च—पापच्यते इत्यत्र पाकध्वंसकालीनवर्त्तमानपाकानुकूलकृतिमानिति बोधः॥ पूर्वकालीनत्वं कर्त्ता च क्त्वार्थः । भुक्त्वा व्रजतीत्यत्र गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्रभिन्नो व्रजतीत्यर्थः । इच्छावांस्तुमुनोर्थः । भोक्तुं व्रजतीत्यत्र भोजनेच्छावान् व्रजतीत्यर्थः । भोक्तुमिच्छतीत्यत्र कर्तरि लक्षणा, भोजनकर्त्तारमात्मानमिच्छतीत्यर्थः । सविशेषणे हि प्रयुज्यमानौ विधिनिषेधौ विशेषणमुपसंक्रामतः, सति विशेष्ये बाधे इतिन्यायात्, विशेषणे कृता विच्छान्वयः। धात्वर्थकर्त्ता कर्तृकृतोऽर्थः । धात्वर्थजन्यफलवान् कर्मकृतोऽर्थः । तथाच पचन् पश्यतीत्यत्र पाककर्त्ता पश्यतीत्यर्थः । पच्यमानं पश्यतीत्यत्र पाकजन्यविक्लित्त्याश्रयं पश्यतीति बोधः । सविषयप्रकृतिकानां त्वाश्रये लक्षणा । जानन् गच्छतीत्यत्र ज्ञानाश्रयो गच्छतीत्यर्थः । भावकृतान्तु ल्युड्घञादीनाम्प्रयोगसाधुत्वमात्रम् । धात्वर्थातिरिक्तस्य भावकृतानुपस्थानात् ॥

तद्धितप्रत्यया अपि नामप्रकृतिकाः । क्वचित्प्रकृत्यर्थेन स्वार्थैकदेशस्य क्वचिच्च तेन स्वार्थस्य अन्वयबोधं जनयन्ति । तत्र गार्गिरित्यपत्यार्थविहिततद्धितार्थस्य अपत्यस्यैकदेशे जन्यत्वे निरूपकतया प्रकृत्यर्थगर्गाद्यन्वयः । गार्ग्य इत्यादौ तद्धितार्थस्य गोत्रापत्यैकदेशपुत्रत्वघटकजन्यत्वे तथा तदन्वयः । गार्ग्यायण इत्यादौ तद्धितार्थस्य युवापत्यस्यैकदेशे जन्यत्वे गार्ग्यस्य, "जीवति तु वंश्ये युवे"ति परिभाषितयुवार्थघटकजीवने च गर्गादेरन्वयः । तेन गर्ग्गादिजीवनकालीनो गर्गगोत्रापत्यस्यापत्यप-

यमिति बोधः। मांजिष्ठं वास इत्यत्र तेन रक्तमित्यर्थे तद्धितो विहितः। तत्सम्बन्धाधीनतदीयरूपारोपविषयत्वं तेन रक्तत्वम्। अत्र च रागकरणस्य मंजिष्ठादेः प्रकृत्यर्थस्य तद्धितार्थैकदेशसम्बन्धे प्रतियोगितया, रूपे चाश्रयतयान्वयः। पौषी रात्रिरित्यादौ नक्षत्रयुक्तकालार्थे तद्धितः। कालस्य नक्षत्रयुक्तत्वं च—तन्नक्षत्रशशिभोगाश्रयत्वं, तदेकदेशे शशिभोगे च कर्मतया तन्नक्षत्रान्वयः। पौषो मासः, पौषो वर्ष इत्यादौ 'सास्मिन्नि'त्यनेन विहितस्य तद्धितस्यापौर्णमासीघटितत्वावच्छिन्नोऽर्थः। पौर्णमास्यां प्रकृत्यर्थपौष्यादेरभेदेनान्वयः। पौषादिपदं च न केवलं यौगिकं, पौषः पक्ष इत्यादिव्यवहारविरहात्, अतो रूढमपि। वैष्णवी ऋक्, 'ऐंद्रं हविरि'-त्यादौ देवतार्थविहिततद्धितस्य तद्देवताकत्वमर्थः। मंत्रस्य तद्देवताकत्वं च तदुद्देश्यकत्यागांगोच्चारणकत्वम्, हविषस्तद्देवताकत्वं च तदुद्देश्यकत्यागकर्मत्वं, तत्त्यागोद्देश्यताया एव तद्देवतापदार्थत्वात्। 'कापोतं राजतं जनते'त्यादौ समूहार्थविहितस्य पर्याप्तसमुदायत्वावच्छिन्नोर्थः। पर्याप्ते प्रकृत्यर्थकपोतत्वाद्यवच्छिन्नस्यान्वयः। कपोतशुकसारिकादिपर्याप्तसमुदायत्वस्य पर्याप्तिश्च न न्यूनवृत्तिकपोतत्वादिनावच्छिद्यते, अतो न तादृशसमुदाये कापोतादिव्यवहारः। मतुबादेर्वर्त्तमानसम्बन्धोर्थः, तथा च गोमानित्यत्र गोनिरूपितवर्त्तमानसम्बन्धवानिति बोधः। निरूपितत्वं संसर्गः। त्वतलादेः प्रकृत्यर्थे प्रकारत्वेन भासमानो धर्मोऽर्थः। तथा च द्रव्यगुणादिशब्देभ्यो जातेः, शुक्लमहदणुह्रस्वादिभ्यो गुणस्य,

पाचकादिभ्यः क्रियायाः, पीताम्बरादिभ्यः सम्बन्धस्य त्वतलादिभिर्बोध इत्यादि बोध्यम् ॥

प्रातिपदिकप्रकृतिकाः 'स्त्रियामि'त्यनेन विहिताष्टाबादयः क्वचित् स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति । अजा, अश्वा, शूद्रा, श्यामा, चपला, ब्राह्मणी, गौरी, सुकेशी, गर्भिणीत्यादौ स्त्रीत्वं च योनिमत्त्वं, क्वचित्स्त्रीप्रत्ययः स्त्रियं भार्यात्वेन प्रकृत्यर्थविशेष्यतया बोधयति । आचार्याणी, मनावी, शूद्रीत्यादौ भार्यात्वं सम्बन्धविशेषः । तत्रैव च निरूपकत्वेन प्रकृत्यर्थान्वयः । खट्वाटवीदेवतापदे च स्त्रीप्रत्यया न बोधकाः, अयोग्यत्वात् । 'यूस्त्र्याख्यावि'त्यत्र स्त्र्याख्यपदं स्त्रीलिंगशब्दपरं, न तु स्त्रीत्वविशिष्टार्थकशब्दपरं, तेनाटव्यादिशब्दानां स्त्रीत्वविशिष्टाबोधकत्वेपि न नदीसंज्ञानुपपत्तिः ॥

अव्ययेषूपसर्गाणां द्योतकत्वमेव, तच्च तात्पर्यग्राहकत्वम् । अभिभवतीत्यादौ धातोरेव तिरस्काराद्यर्थकत्वमन्यथा कर्मणि प्रत्ययाऽसम्भवः । निपातानान्तु तत्तदर्थवाचकत्वम् । तत्र सादृश्यमिवार्थः । चंद्र इव मुखमित्यत्र चन्द्रनिरूपित सादृश्यवन्मुखमिति बोधः।नञोऽभावत्वेन भेदेऽत्यन्ताभावे च शक्तिरन्यत्र लक्षणा।तत्रापि नियमविशेषाश्रयणान्नातिप्रसङ्गः । तथाहि—अनुयोगिप्रतियोगिबोधकपदयोः सामानाधिकरण्ये भेदबोधकता, वैयधिकरण्येऽत्यन्ताभावबोधकता। यथा—घटः पटो नेति, भूतले घटो नास्तीति । एवकारस्य तु अन्ययोगायोगात्यन्तायोगव्यवच्छेदा अर्थास्तद्विशेषकश्च सम-

भिव्याहारविशेषः। तथा च समानाधिकरणविशेष्यपदसंगतस्य व्यधिकरणविशेषणसंगतस्य च एवकारस्यान्ययोगव्यवच्छेदार्थकता। यथा—पार्थ एव धनुर्धर इत्यादौ, विशेष्यसंगतस्य बोधस्तु पार्थान्यतादात्म्याभाववत्प्रशस्तधनुर्द्धराभिन्नः पार्थ इति । धनुर्द्धरपदस्य तत्प्राशस्त्ये लक्षणास्वीकाराच्च तथा बोधः । एवं पृथिव्यामेव गन्ध इत्यादौ विशेषणसङ्गतस्य बोधस्तु पृथिव्यन्यसमवेतत्वाभाववान् गन्धः, पृथिवीवृत्तिरिति। समानाधिकरणविशेषणसङ्गतस्य तु अयोगव्यवच्छेदार्थकता । यथा—शंखः पाण्डर एवेत्यादौ, अत्र च व्युत्पत्तिवैचित्र्यादवच्छेदावच्छेदेनैवान्वयः । तेन शंखत्वावच्छेदेन पाण्डरतादात्म्याभावस्य व्यवच्छेदः । बोधस्तु शंखत्वव्यापकस्वरूपसम्बन्धेन पाण्डरतादात्म्याभावाभाववान् शंखः पाण्डराभिन्न इति । क्रियासङ्गतस्य तस्य तु अत्यन्तायोगव्यवच्छेदार्थकता, यथा—नीलं सरोजं भवत्येवेत्यत्र भवनाश्रयसरोजं नीलत्वात्यन्ताभावाभाववत् इति बोधः। शिरोमणिमते सर्वत्रान्ययोगव्यवच्छेद एवार्थः । वैयाकरणास्तु सर्वत्र निपातानामुपसर्गाणां च तात्पर्यग्राहकत्वमेव । तथा च—चन्द्र इव मुखमित्यादावपि चन्द्रादिपदस्यैव तत्सदृशादौ लक्षणा। एवं च नामार्थयोः अभेदान्वये निपातातिरिक्तत्वमपि नापेक्ष्यम् इत्याहुः । केषांचिन्नञादीनां वाचकत्वमपि नव्यवैयाकरणाः स्वीचक्रुः ।

चार्वाकाः प्रत्यक्षमेव प्रमाणं मन्वते, तैर्धूमादिभिर्वह्न्याद्यनुमानमपलपितुमशक्यम् । गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्, असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्, यथा गोपदं गोत्वप्रवृत्ति-

निमित्तकं तथा एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि, आकांक्षादिमत्पदकदम्बकत्वात्, गामानय इति मद्वाक्यवत्, इत्यनुमानाभ्यां गतार्थत्वादुपमानशब्दयोर्न प्रमाणान्तरतेति वैशेषिकाः, तन्न, उपमिनोमि, शब्दात्प्रत्येमीत्यनुभवसिद्धयोरनुमितिविलक्षणयोरुपमितिशाब्दयोरपलपितुमशक्यत्वात्। एतेनोपमानापलापिसांख्यमतमपि प्रत्युक्तम् । प्राभाकराद्याः उपपादककल्पनाहेतुभूतोपपाद्यज्ञानम् अर्थापत्तिप्रमाणम् । यथा—पीनो देवदत्तो दिवा न भुंक्ते इति दृष्टे श्रुते वा दिवा अभुंजानस्य पीनत्वमुपपाद्यमनुपपन्नं सत् स्वस्योपपादकं रात्रिभोजनं कल्पयति इत्याहुः । तन्न, देवदत्तः रात्रिभोजी दिवाऽभुंजानत्वे सति पीनत्वात्, यन्नैवं तन्नैवं, यथा—दिवारात्र्यभोजी इति केवलव्यतिरेकिणा गतार्थत्वात् । अनुपलब्धेः प्रमाणान्तरत्वं प्राङ् निरस्तम् । पौराणिकाः संभवैतिह्ये अप्याहुः । तत्र, अविनाभाविनोर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणं संभवः । स द्विधा—ब्राह्मणेषु चतुर्दश विद्याः संभवंतीति संभावनात्मकः । शते पंचाशत्संभवन्ति इति निर्णयात्मकः । सोपि न प्रमाणान्तरम्, आद्यस्य प्रमाकरणत्वाभावादेव, द्वितीयस्य तु शतस्य पञ्चाशद्व्याप्यत्वादनुमानेन्तर्भावात् ॥ विशिष्यानिर्णीतप्रथमवक्तृकः शब्दविशेषः ऐतिह्यम् । यथा—इह वटे यक्षस्तिष्ठति, तत्त्वप्रमाणमेव । यथार्थज्ञानजनकत्वे तु शब्देन्तर्भवति । तांत्रिकाभिमता चेष्टा तु अनुमानप्रयोजिकैव स्वसंकेतग्राहके शब्देन्तर्भूता ॥ अयथार्थानुभवस्त्रिधा—संशयविपर्ययतर्कभेदात् । एकधर्मिणि विरुद्ध-

भावाभावप्रकारकज्ञानम् संशयः । यथा—स्थाणुर्वा पुरुषो वा । विशेषादर्शनं कोटिद्वयस्मरणं संशयमात्रहेतुः । वक्रकोटरादि-विशेषादर्शनं स्थाणुत्वपुरुषत्वे च कोटिद्वयम् । संशयस्त्रिविधः—साधारणधर्मजोऽसाधारणधर्मजो विप्रतिपत्तिजश्च । आद्यो दर्शितः । तत्रोच्चत्वं साधारणो धर्मः । द्वितीयस्तु शब्दे शब्द-त्वेन नित्यत्वानुमाने शब्दत्वमसाधारणो धर्मस्तेन शब्दो नित्यो न वेति संशयः । तृतीयः प्रमात्वं स्वतो ग्राह्यम्परतो वेति संशयः ॥ पुनः संशयो द्विविधः—बहिर्विषयोन्तर्विषयश्च।आद्योपि द्विधा—दृश्य-मानधर्मिकः अदृश्यमानधर्म्मिकश्च । आद्य उदाहृतः । द्वितीयस्तु वृक्षाद्यावृते धर्मिणि शृङ्गमात्रदर्शने अयं गौर्गवयो वेति संशयः।अन्त-र्विषयकस्तु स्वज्ञानादौ सम्यगसम्यग्वेति संशयः । मिथ्याज्ञानापर-पर्य्यायोऽयथार्थनिश्चयः विपर्ययः । निश्चयत्वं च संशयभिन्न-ज्ञानत्वम् । यथा—शुक्ताविदं रजतमिति, अनात्मनि देहे गौरोहमि-त्यादि, अयमेव भ्रमोप्युच्यते । विपर्यये च सामान्यतो धर्मिज्ञानं, विशेषादर्शनम्, एककोटिस्मरणं, दोषश्चेति कारणानि । दोषास्तु—सादृश्यदूरत्वपित्तकाचादयो न नियताः ॥ व्याप्यारोपेण व्यापका-रोपस्तर्कः । स द्विधा—विषयपरिशोधको व्याप्तिग्राहकश्च । आद्यो यथा-पर्वतो यदि वह्न्यभाववान्स्यात्तर्हि धमाभाववानपि स्यात् ।द्विती-यो यथा—धूमश्चेद्वह्निव्यभिचारी स्यात्तर्हि वह्निजन्यो न स्यात् । अत्र वह्न्यभावरूपव्याप्यारोपेण धूमाभावरूपव्यापकारोपः कृतः । न तु तत्र वह्न्यभावधूमाभावौ वर्त्तेते इत्यभिप्रायेणास्यायथार्थज्ञानत्वमु-च्यते । अप्रमात्वाङ्गीकारेस्य विपर्ययेन्तर्भावेपि अनुमानानुग्राहकतया

पृथङ् निर्देशः । परन्तु यदि वह्न्यभाववान्स्यात्तर्हि धूमाभाववानपि स्यात् इति ज्ञानं कथम्, अप्रमापक्षपातं विहाय चिन्त्यमानस्यास्य प्रमात्वस्यैवानुभवात् । अप्रमात्वे च कुतो नियमेनानुमानानुग्राहकता । अन्यथा, धर्ममनुतिष्ठेच्चेत्सुखं यायात् इत्यादेरप्ययथार्थतापत्त्यैतद्वाक्यप्रयोक्तृणां मिथ्याभाषित्वापत्तिः । न चात्र वह्न्यभावधूमाभावयोर्बाधितयोर्विषयत्वादप्रमात्वमिति वाच्यम्, वह्न्यभाववद्भेदाश्रयः पर्वतस्तद्व्यापकीभूतधूमाभाववद्भेदवानिति बोधस्वारस्येन वह्निधूमसत्त्वस्यैव विषयत्वात्, तस्य चाबाधितत्वात् । अत एव ह्रदो यदि धूमवान्स्याद्वह्निमान्स्यात्, इत्यत्र धूमवद्भिन्नो ह्रदो धूमव्यापकवह्निमद्भेदवानिति बोधोऽङ्गीकृतो जगदीशैः । अतादृशबोधाङ्गीकारे विषयपरिशोधनं व्याप्तिग्रहणं च न स्यात् । अत एवायथार्थानुभवलक्षणाक्रान्तत्वमप्यत्र न शंक्यम्, तस्मात्प्रमाणानुग्राहकस्तर्को युक्तिविचारविवेचनादिपदाभिलाप्यः प्रमायामेव गण्यः, अमुन्तर्कमादायैव न्यायविदः स्वीयान्तार्किकपदवीं सश्लाघं स्वीकुर्वते । "आर्षन्धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः ॥" इत्यादिना मन्वादयोऽपि तं प्रशंसन्ति । तत्र तर्कशब्देनानुमानं मीमांसा वा गृह्यत इत्यपि मतम् । तस्मादस्य तर्कस्यायथार्थत्वे मानाभावः । असत्कल्पनारूपस्तु दुस्तर्कपदाभिलाप्यः आपाद्यासिद्ध्यादिदोषवान्, जात्युत्तरोदरान्तर्निक्षेप्यश्च, कविजनोद्भावितसंभावनवदप्रमैवेत्यलम् ॥ केचित्तु तर्कः पञ्चधा—आत्माश्रयः, अन्योन्याश्रयः, चक्रिका, अनवस्था, प्रमाणबाधितार्थप्रसंगश्च इति प्राहुः । व्याप्तिग्राहकतर्क एव

प्रमाणबाधितार्थप्रसंग इत्युच्यते । अन्ये तु, व्याघातः, आत्माश्रयादिचतुष्कम्, प्रतिबन्दी, कल्पनालाघवम्, कल्पनागौरवम्, उत्सर्गः, अपवादः, वैयात्यम्, इत्येकादशभेदानाहुः । विरुद्धसमुच्चयः व्याघातः । यथा—विवादाध्यासितं जगत्, प्रयत्नजन्यं, कार्यत्वात्, घटवत् । अत्र हेतुरस्तु, साध्यम्मा भूदिति यदि वादी ब्रूयात, तदा घटतद्ध्वंसयोरिव कार्यत्वप्रयत्नाजन्यत्वयोर्विरुद्धयोरेकत्र समुच्चये व्याघातः स्यात् इति परिहरणीयम् ॥ अव्यवधानेन स्वापेक्षणमात्माश्रयः । यथा—पूर्वोदाहरणे यदि वादी ब्रूयात् घटतद्ध्वंसयोरेकत्र समुच्चयो न भवति, कार्यत्वप्रयत्नाजन्यत्वयोस्तु भवति इति, तत्र प्रष्टव्यम्—अनयोर्विशेषोऽस्ति न वा । अस्ति चेत्, तत्र सविशेष एव मानमन्यद्वा स एव चेदात्माश्रयः स्यात, स्वसिद्धौ स्वापेक्षणात् । एवं स्वाधिकरणतास्वज्ञानस्वोत्पत्तिस्वस्वामित्वस्वोपमादावात्मापेक्षणेपि आत्माश्रयेतरेतराश्रयाद्या बोध्याः ॥ द्वयोरन्योन्यापेक्षणमितरेतराश्रयः । यथोक्तस्थले, यदि वादी ब्रूयात् तत्र विशेषे विशेषान्तरं मानम् इति, तदा इतरेतराश्रयः स्यात् । प्रथमविशेषसिद्धौ द्वितीयापेक्षणात्, द्वितीयविशेषसिद्धौ प्रथमापेक्षणात् ॥ पूर्वस्य पूर्वापेक्षितमध्यमापेक्षितोत्तरापेक्षितत्वं चक्रकम् । यथोक्तस्थले वादी ब्रूयात् द्वितीयविशेषे तृतीयविशेषो मानमिति । तदा तृतीये किं मानम् । तृतीयो द्वितीयः प्रथमो वा । तत्र तृतीयद्वितीययोरात्माश्रयान्योन्याश्रयौ । तृतीये तु चक्रकम् । प्रथमेन स्वसिद्धौ द्वितीयस्यापेक्षणात्, द्वितीयेन तृतीयस्यापेक्षणात्, तृतीयेन प्रथमस्यापेक्षणात् ॥ पूर्वस्यपूर्वस्योत्तरोत्तरापेक्षितत्वमनवस्था । यथो-

क्तस्थले वादी ब्रूयात्, तृतीयविशेषे चतुर्थविशेषो मानम् । तत्र च पञ्चम इत्यादि, तदा अनवस्थादोषः स्यात् । प्रथमेन द्वितीयस्य तेन तृतीयस्य । एवं तृतीयादिभिरुत्तरोत्तरश्चतुर्थादीनामपेक्षणात्॥ नोद्यपरिहारसाम्यं प्रतिबंदी । यथोक्तस्थले वादी ब्रूयात्, पञ्चमः स्वतो मानन्तत्र न मानापेक्षेति, एवं चेत् पञ्चमवत्प्रथम एव स्वतो मानं किन्न स्यादुभयत्र नोद्यपरिहारयोः साम्यात् ॥ समर्थाल्पकल्पना कल्पनालाघवम्।यथा—जगतः कर्तृजन्यत्वानुमाने वादी ब्रूयात्,अतिमहतो जगतः एकः कर्त्ता न संभवतीति बहव ईश्वराः सिद्ध्येयुस्तत्र समर्थस्य एकस्यैवेश्वरस्य कल्पनायां लाघवमतो न बहव ईश्वराः ॥ समर्थानल्पकल्पना कल्पनागौरवम् । यथोक्तानुमानेन एकस्येश्वरसिद्धिं न स्वीकुर्याद्वादी तर्हि समर्थानामनल्पानां कल्पनारूपं गौरवं स्यात् ॥भूयोदर्शनमुत्सर्गः। यथा—यत्रयत्र चेतनत्वं तत्रतत्र कर्तृत्वं कुलालादौ दृष्टं तथा ईश्वरेपि चेतनत्वात्कर्तृत्वं सम्भवति ॥ तस्योत्सर्गस्यैकदेशे बाधः अपवादः । यथोक्तस्थले वादी ब्रूयात्, कुलालादिषु चेतनेषु कर्तृत्वन्निश्चितमेव तथेश्वरेपि निश्चितमेव कर्तृत्वं स्यात्, तत्र कर्तृसम्भावनायाः प्रयोजनाभावादिति चेत्, यथा मुक्तेषु चेतनेषु अपि कर्तृत्वस्यापवादः तथेश्वरेपि कर्तृत्वं न निश्चितं प्रमेयत्वेन नित्यत्वमिव । यद्वा यथोक्तस्थले वादी ब्रूयात्, यथा चेतनेषु सशरीरत्वं दृष्टं तथेश्वरेपि स्यादिति चेत्, यथा चेतनेष्वपि मुक्तेषु सशरीरत्वस्यापवादः, तथेश्वरे सशरीरत्वस्यापवादः ॥ अप्रतिसमाधेयप्रश्नपरंपरायां मौनं वैयात्यम् । यथोक्तस्थले वादी ब्रूयात्, ईश्वरसाधके प्रमाणे किं प्रमाणं, तत्साधक-

प्रमाणे च किं प्रमाणमित्यादि, तत्र समाधानानर्हायाम्प्रश्नपरम्परायां वादिना क्रियमाणायान्तदवज्ञारूपम्मौनं वैयात्यम् ॥ अत्र तर्के सप्त दूषणानि। आपाद्यासिद्धिः,आपादकासिद्धिः, उभयासिद्धिः, प्रशिथिलिमूलता, मिथस्तर्कविरोधः, इष्टापत्तिः, विपर्ययापर्यवसानं चेति। एषामुदाहरणानि ग्रन्थान्तरादवसेयानि। स्वप्नज्ञानम्मानसविपर्ययेन्तर्भवति। मनसि पुरीतति स्थिते सुप्तिः, तद्बहिःस्थे जाग्रत्, संधिस्थे स्वप्नः। अदृष्टविशेषेण जाग्रच्चिन्तया वातादिदोषेण च स्वप्नो भवति। केचित्तु अयथार्थानुभवसंशयविपर्ययस्वप्नानध्यवसायभेदाच्चतुर्धेत्याहुः। तत्र किञ्चिदिदमित्याकारकं ज्ञानमनध्यवसायः। अत्र मते तर्को विपर्ययेन्तर्भवति। अन्ये तु संशयो विपर्ययश्चेति द्विधा प्राहुस्तेषां स्वप्नादयो विपर्ययेन्तर्भवंति। विपर्यय एवान्यथाख्यातिरित्युच्यते। ख्यातिर्भानमिति पर्यायौ। तत्रात्मख्यातिर्विज्ञानवादिनाम्। ते ह्याहुः, रज्जुदेशे अन्यदेशे च सर्पो नाम बुद्धेर्बहिर्न क्वाप्यस्ति, सर्वेषां पदार्थानां बुद्धेरभिन्नत्वात्। बुद्धिरेव हि सर्वेषां पदार्थानामाकारं धारयति। सा च क्षणिकविज्ञानरूपा क्षणेक्षणे उत्पद्यते नश्यति च। विज्ञानमेवात्मा स एव सर्वरूपेण प्रतीयतेऽत आत्मन एव सर्पादिरूपेण भानादात्मख्यातिरिति। शून्यवादिनामसत्ख्यातिः, रज्ज्वादिदेशेऽन्यदेशे च सर्पादिरत्यन्तमसन्, असतो ह्येव तस्य रज्ज्वादिदेशे भानादसत्ख्यातिः॥ आख्यातिः सांख्यप्राभाकरयोः। तौ ह्येवं वदतः, यदि असतोपि भानं स्यात्, तदा वंध्यासुतशशशृंगादीनामपि भानप्रसङ्गातोऽसत्ख्यातिर्न संभवति, नाप्यात्मख्यातिः। आत्मा हि विज्ञानवादिनां क्षणिकरूपस्तत्ख्यातिश्चेत्सर्पादिभानमपि क्षण-

मात्रमेव स्यान्नाधिककालम्, अतो रज्ज्वादौ सर्पादिभाने ज्ञानद्वयं, तत्र रज्ज्वादीनाञ्चक्षुःसम्बन्धे तेषामिदंरूपतया सामान्यज्ञानम् । सर्पज्ञानं स्मृतिरूपं, तथापि दोषवशाज्ज्ञानद्वयमेकज्ञानमेव भासते, ज्ञानद्वयविवेकाग्रह एव भ्रमस्थले भवति इयमख्यातिः ॥ नैयायिका वैशेषिकाश्चान्यथाख्यातिमाहुः । तथा हि—वल्मीकादिस्थोऽपि सर्पो नेत्रगततिमिरदोषाद्रज्जुदेशे दृश्यतेऽतोन्यथाभानादन्यथाख्यातिरुच्यते । चिन्तामणिकारस्तु वल्मीकादिस्थः सर्पो रज्ज्वादिदेशे न दृश्यतेऽपि तु दोषवता चक्षुषा रज्जोः स्वरूपेण भानन्न भवति किन्तु सर्परूपेणेत्यन्यथाख्यातिमाह ॥ वेदान्तिनस्तु अनिर्वचनीयख्यातिमाहुः । तथा हि—शुक्तिरजतादिभ्रान्तिज्ञाने प्रातिभासिकरजतोत्पादिका सामग्री विलक्षणैव । तथाहि—काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याकारा च काचिदन्तःकरणवृत्तिरुदेति, तस्याञ्च वृत्ताविदमवच्छिन्नं चैतन्यं प्रतिबिम्बति, तत्र वृत्तेर्गमने नेदमवच्छिन्नचैतन्यं वृत्त्यवछिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति । ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाविद्याचाकचक्यादिसादृश्यसन्दर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते । अविद्याकार्यञ्च रजतं न सत्, उत्तरत्र बाधाभावप्रसंगात् । नापि शशशृंगवदत्यन्तासत्, इदं रजतमिति प्रतीत्यनापत्तेः, अत एवानिर्वचनीयमेवेत्यनिर्वचनीयख्यातिः ॥ रामानुजीयास्तु पञ्चीकरणप्रक्रियया सर्वेषां भूतानां सर्वत्र संमेलनाच्छुक्तौ रजतांशानां विद्यमा-

नत्वात्तज्ज्ञानं यथार्थमेवेति यथार्थख्यातिमाहुः । इयमेव सत्ख्यातिरप्युच्यते ॥ संस्कारमात्रजन्यं ज्ञानं स्मृतिः । सा द्विधा—प्रमाजन्या यथार्था, अप्रमाजन्यायथार्था । शेषं संस्कारनिरूपणे लिखितम् ॥ तद्वति तत्प्रकारकत्वरूपप्रमात्वस्य उत्पत्तौ ज्ञप्तौ च स्वतस्त्वपरतस्त्वयोर्विप्रतिपत्तिः । तत्र, दोषाभावसहकृतज्ञानसामान्यसामग्रीप्रयोज्यत्वम् उत्पत्तिस्वतस्त्वम् । दोषाभावसहकृतयावत्स्वाश्रयग्राहकज्ञानसामग्रीग्राह्यत्वम् ज्ञप्तिस्वतस्त्वम् । इदमेव स्वतोग्राह्यत्वम् । अयं पक्षो मीमांसकानाम् । तत्र, गुरुमतेऽयं घट इति ज्ञानमेव स्वप्रकाशत्वाद्विषयमात्मानं ज्ञानप्रमात्वञ्च गृह्णाति । मुरारिमिश्रमतेऽयं घट इति ज्ञानानंतरं घटमहं जानामीत्यनुव्यवसायस्तेनैव प्रमात्वग्रहः । भट्टमते ज्ञानस्यातीन्द्रियत्वेन ज्ञानमनुमेयम् । तथा हि—अयं घट इति ज्ञानानन्तरं घटे ज्ञातता उत्पद्यते । ततो ज्ञातो घट इति ज्ञातताप्रत्यक्षम्, ततो ज्ञानानुमानम् । यथा—घटः घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्त्वात्, यन्नैवन्तन्नैवम्, यथा पटः, तावतैव तस्य धर्मधर्मिविषयकत्वेन प्रमात्वानुमानम् । वेदान्तिनाम्मते अयं घट इति वृत्तिज्ञानम्प्रमात्वाश्रयः, तद्ग्राहकं च साक्षिज्ञानं, तच्च वृत्तिज्ञानं गृह्णत् तत्प्रमात्वमपि गृह्णाति, इदमेव प्रमायां स्वतोग्राह्यत्वम् । नैयायिकास्तु स्वतस्त्वन्न स्वीकुर्वते । तथाहि—आदाविन्द्रियार्थसन्निकर्षाज्जलजलत्वे, इति निर्विकल्पकम्, ततः इदञ्जलमिति विशिष्टज्ञानम् व्यवसायः, ततो जलमहं जानामीत्यनुव्यवसायः, ततः प्रमात्वाप्रमात्वे इति कोटिद्वयस्मरणम्, ततः इदञ्ज्ञानम्प्रमा न वा इति प्रमात्वसंशयः, ततो विशेषदर्शनान-

न्तरञ्जलेच्छा, ततः प्रवृत्तिः, ततो जलप्राप्तिः, ततः प्रमात्वग्रहः । पूर्वोत्पन्नञ्जलज्ञानं प्रमा, सफलप्रवृत्तिजनकत्वात्, यन्नैवन्तन्नैवम्, यथा अप्रमा । इदमेव च प्रमात्वे परतोग्राह्यत्वम्, तल्लक्षणञ्च । ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वम् ज्ञप्तिपरतस्त्वम् । ज्ञानमात्रजनकसामग्र्यतिरिक्तकारणप्रयोज्यत्वम् उत्पत्तिपरतस्त्वम् । अत्र ज्ञानसामान्यसामग्रीतो भिन्नं कारणं गुणः । एवमप्रमात्वमपि परत एव गृह्यते जायते च । पूर्वोत्पन्नं रजतज्ञानम् अप्रमा, निष्फलप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवम्, यथा प्रमा । मीमांसकमतं तु संशयानुपपत्तेर्न समीचीनम् । अस्मिन् विषये प्रमात्वस्थाने बहुषु ग्रन्थेषु प्रामाण्यशब्दोल्लेखः प्रमाशब्दसमानार्थभावल्युडन्तप्रमाणशब्दजन्यतया प्रमात्वाभिप्रायेण योज्यः । तत्र अप्रमाया दोषो जनकः, प्रमायास्तु गुणः। चाकचक्यपित्तदूरत्वादयो दोषास्त्वनियताः, गुणास्तु प्रत्यक्षादिषु सन्निकर्षपरामर्शसादृश्ययोग्यताः ॥ इति न्यायप्रदीपे प्रत्यक्षादिप्रमाणानां संशयादेश्च निरूपणं षष्ठः परिच्छेदः ॥ ६ ॥

अथ गौतमोक्तन्यायशास्त्रस्य षोडशपदार्थास्सूत्रमात्रोक्तास्तद्भेदास्तेषां सप्तस्वेव पदार्थेष्वन्तर्भावश्चोच्यते । यः पदार्थः पूर्वमुक्तस्तन्निरूपणन्नावश्यकम् । तत्र प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितंडाहेत्वाभासच्छलजातिनिग्रहस्थानाख्याः षोडश पदार्थाः । तत्र प्रत्यक्षादीनि प्रमाणानि चत्वार्युक्तानि । तत्र प्रत्यक्षस्येन्द्रियरूपतया द्रव्येन्तर्भावः । अनुमानं च पूर्ववदादिभेदात्त्रिधा । व्याप्तिज्ञानरूपस्यास्य गुणे, उपमानमपि सादृश्यादिविशिष्टपिण्डज्ञानरूपं, तस्यापि गुणे। शब्दप्रमाणन्दृष्टार्थकमदृष्टार्थकमिति द्विधा—आद्यम् ओदनार्थी पचेदित्यादिकम् । द्विती-

यम् स्वर्गकामो यजेतेत्यादिकम् । पदज्ञानं शब्दप्रमाणमिति मते ज्ञाने, वाक्यरूपन्तदिति मते शब्दे ॥

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः प्रमेयाणि द्वादश । तत्रात्मशरीरेन्द्रियाणान्द्रव्ये, एकैकेन्द्रियमात्रग्राह्यविशेषगुणाः, अर्थाश्च, रूपादिचतुष्कम्,शब्दश्च, तेषां गुणे, बुद्धेर्गुणे, मनसो द्रव्ये । प्रवृत्तिस्त्रिधा—वागारम्भः, शरीरारम्भो, बुद्ध्यारम्भश्च । वचनानुकूलो यत्नः वागारम्भः । चेष्टानुकूलो यत्नः शरीरारम्भः । एतद्द्वयभिन्नो यत्नः बुद्ध्यारम्भः । तस्याः प्रवृत्तेः गुणे । दोषा रागद्वेषमोहाः । तत्र रागः कामः । मोहो मिथ्याज्ञानम् । एतेषाम्भेदाः कारिकासूद्दिष्टाः, तेषां गुणे । प्रेत्यभावो मरणोत्तरं जन्म, तच्च भूयोभूयो मरणं जन्म चेत्यर्थः । तत्र चरमः शरीरप्राणसंयोगध्वंसो मरणम्, तस्याभावे । आद्यः प्राणशरीरसंयोगो जन्म, तस्य गुणे । फलं सुखदुःखसाक्षात्कारः, तस्य गुणे । दुःखस्य गुणे । दुःखध्वंसरूपापवर्गस्याभावे अन्तर्भावः ॥ इति प्रमेयाणि ॥

संशयस्य गुणे, प्रयोजनं सुखं दुःखाभावश्च मुख्ये, तयोर्गुणेऽभावे चान्तर्भावः । गौणप्रयोजनस्य यथायथं द्रव्यादिषु, दृष्टान्तस्य च यथायथं द्रव्यादिषु । प्रामाणिकत्वेनाभ्युपगतोऽर्थः सिद्धान्तः । स चतुर्धा—सर्वतन्त्रसिद्धान्तप्रतितंत्रसिद्धान्ताधिकरणसिद्धान्ताभ्युपगमसिद्धान्तभेदात् । सर्वशास्त्राविरुद्धत्वेन स्वमतेङ्गीकृत आद्यः, यथा—घ्राणादीनामिन्द्रियत्वादि । वादिप्रतिवादिनोरेकतरेणैव स्वीकृतो द्वितीयः, यथा—मीमांसकानां शब्दनित्यत्वम् । यस्या-

र्थस्य सिद्धौ सत्यामेव प्रकृतार्थसिद्धिस्स तृतीयः, यथा—द्व्यणुकं प्रकृत्य उपादानगोचरापरोक्षज्ञानादिमज्जन्यत्वे सिद्ध एवेश्वरस्य सर्वज्ञत्वं सिद्धयतीति । साक्षात्स्वसूत्रेष्वकथितस्याभ्युपगमश्चतुर्थः, यथा—मनस इन्द्रियत्वम् । अस्य यथायथं द्रव्यादौ । अवयवाः प्रतिज्ञादयः । तत्र हेत्ववयवः अज्ञातव्यतिरेकव्याप्तिकहेतुबोधकः, अप्रतीतान्वयव्याप्तिकहेतुबोधकः, प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधक इति त्रिधा । उदाहरणमपि अन्वयव्याप्तिबोधकं व्यतिरेकव्याप्तिबोधकं चेति द्विधा । उपनयोऽन्वयी व्यतिरेकी चेति द्विधा।प्रतिज्ञादीनां वाक्यरूपत्वा_णे । तर्कस्य गुणे, प्रमारूपस्य निर्णयस्य गुणे ॥ तत्त्वबुभुत्सोः कथा वादः, तस्य गुणे।उभयपक्षस्थापनवती विजिगीषुकथा जल्पः, तस्य गुणे।स्वपक्षस्थापनहीना विजिगीषुकथा वितंडा, तस्या गुणे। हेत्वाभासाः पंच, तेषां यथायथं द्रव्यादौ । वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानं छलम् । तत्रिधा—वाक्छलम्, सामान्यच्छलम्, उपचारच्छलं च।अनभिप्रेतशब्दार्थकल्पनेन दूषणाभिधानं वाक्छलम्, अयमुरुषः नेपालादागतः, नवकंबलवत्त्वात् इत्युक्ते, कुतोऽस्य नवसंख्याकाः कम्बला इति । अतिसामान्ययोगादसंभवदर्थकल्पनया दूषणाभिधानं सामान्यच्छलम्, अयं ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते परो वदति—कुतो ब्राह्मणत्वेन विद्याचरणसम्पद्, बाल्ये व्यभिचारात् । एकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या प्रतिषेध उपचारच्छलम्, यथा मंचाः क्रोशन्ति, नीलो घट इत्युक्ते मंचस्था एव क्रोशन्ति, न तु मंचाः।घटस्य कथं नीलरूपाभेदः इति छलस्य

गुणे ॥ असदुत्तरं जातिः । स्वाव्याघातकमुत्तरमिति यावत् । ताश्चतुर्विंशतिः, साधर्म्यसमादिभेदात् । साधर्म्येण स्थापनाहेतुदूषकमुत्तरं साधर्म्यसमा, यथा—आत्मा सक्रियः, क्रियाहेतुगुणवत्त्वात्, लोष्टवत् । क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति स्थापनायामुत्तरं, यदि सक्रित्वसाधर्म्यात्सक्रियः, तदा विभुत्वरूपनिष्क्रियसाधर्म्यान्निष्क्रिय एव किं न स्यात्। न चात्र किंचिद्विनिगमकमस्ति इति १। वैधर्म्येण दूषकमुत्तरं वैधर्म्यसमा, यथा-तत्रैव क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा, तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात् । न हि तत्साधर्म्यात्क्रियावता भवितव्यं, तद्वैधर्म्यान्निष्क्रियेण न भवितव्यमित्यत्र किंचिन्नियामकस्तीति २। परोक्तसाधनादेव तदव्यापकधर्मस्य पक्षे आपादनमुत्कर्षसमा, यथा—शब्दोऽनित्यः, कृतकत्वात्, घटवत्; इत्यादौ, कश्चिदेवमाह—यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना शब्दो घटवत्सावयवः स्यादिति ३ । परोक्तदृष्टांतसाधर्म्येण पक्षे पराभिमतधर्मांतरस्याभावसाधनमपकर्षसमा, यथा-तस्मिन्नेवानुमाने यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्तर्हि तेनैव शब्दो घटवदश्रावणः स्यादिति ४ । वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनं वर्ण्यसमा, यथा—पूर्वोक्तानुमाने क्रियाजनकनोदनाख्यसंयोगवत्त्वाल्लोष्टादेर्भवतु क्रियावत्त्वम्, आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यादिति ५ । साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनमवर्ण्यसमा,यथा—तत्रैवानुमाने लोष्टादिगतनोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम् । तथा च तुल्यतया यथा—

ऽसिद्धेन क्रियाहेतुगुणेनात्मनि क्रियावत्त्वं साध्यते, तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते, नियामकाभावादिति ६। दृष्टान्तविकल्पम्प्रदर्श्य दार्ष्टांतिकविकल्पकथनं विकल्पसमा, यथा—तत्रैवानुमाने क्रियाहेतुगुणयुक्तं किंचिद्गुरु, यथा लोष्टादि, किंचिल्लघु, यथा वायुः। एवं क्रियाहेतुगुणयुक्तं किंचित् क्रियावत् स्यात्, यथा—लोष्टादि। किञ्चिदक्रियं स्यात्, यथा—आत्मा पूर्वविकल्पो भवत्ययन्तु न भवतीत्यत्र किं नियामकं स्यादिति ७। दृष्टान्तस्य पक्षतुल्यताकथनं साध्यसमा, साध्यशब्दोऽत्र पक्षवाची। यथा—तत्रैव यदि, यथा लोष्टस्तथा आत्मेति त्वयोच्यते तदा, यथा आत्मा तथा लोष्ट इत्यप्यागतम्, तथा च यद्यात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेपि तत्साधनीयं ते नो चेत्तर्हि यथा लोष्टस्तथा आत्मेति न वाच्यम्, लोष्टसदृश आत्मा, आत्मसदृशो लोष्टो न इत्यत्र नियामकाभावादिति ८। प्राप्त्या प्रत्यवस्थानम्प्राप्तिसमा। प्राप्तिरत्र साध्यहेत्वोः सामानाधिकरण्यम्, यथा—तत्रैव क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते, किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न, उभयोरविशेषादिति ९। अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमा, यथा तत्रैव पूर्वोक्तदोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम्, तथा प्राप्तत्वाविशेषात्सर्वः सर्वं साधयेदिति अयमेव हेतुः साध्याभावं किमिति न साधयेदित्यत्र विनिगमकाभावादिति १०। साधनपरंपराप्रश्नः प्रसंगसमा, यथा—क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम्, तत्र किं साधनम्, न हि साधनं विना कस्यचित्सिद्धिरस्ति, एवं तत्रापि किं साधनमित्यादि

११। दृष्टान्तान्तरेण साध्याभावसाधनं प्रतिदृष्टान्तसमा, यथा—तत्रैव लोष्टदृष्टांतेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात्, लोष्टदृष्टान्तेन क्रियावत्त्वमाकाशदृष्टान्तेन निष्क्रियत्वञ्चेत्यत्र नियामकाभावादिति १२। अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमा, यथा—घटो न नित्यः, जन्यैकत्वादित्यादौ, कश्चिदाह—यदि जन्यैकत्वमनित्यत्वे प्रमाणम्, तदा घटे एकत्वोत्पत्तेः पूर्वन्तदभावान्नित्यत्वं, नित्यश्चेत्तदाऽनुत्पन्न एवेति १३। साधारणधर्मम्प्रदर्श्य संशयोत्थापनं संशयसमा, यथा—शब्दोऽनित्यः, कार्यत्वादित्यादौ शब्दस्यानित्येन घटेन सह कार्यत्वरूपं साधर्म्यं यथास्ति, तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्तीत्युभयसाधर्म्यदर्शनात्संशयः स्यात्, एकपरिशेषे नियामकाभावादिति १४। वायुक्तहेतोः साध्यविपरीतसाधकहेत्वंतरोद्भावनम् प्रकरणसमा, सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणं बोध्यम् १५। कालत्रयेऽपि हेतुत्वासम्भवेनाहेतुत्वकथनमहेतुसमा। यथा—कार्यत्वादिरूपसाधनम् साध्यादनित्यत्वात्पूर्वकालवृत्ति चेत्तदाऽनित्यत्वरूपसाध्यस्य तदानीमभावात्कस्य साधकम्, अथ पश्चात्कालवृत्ति तदा पूर्वकाले साधनाभावात्कस्य साध्यमनित्यत्वं, यदि वोभयमेककालवृत्ति, किं कस्य साधनं किं कस्य साध्यं, विनिगमकाभावादिति। हेतुसमेति पाठे त्वकालत्रयेऽपि हेतुत्वस्यासम्भवकथनं हेतुसमेत्यर्थः १६। अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम् अर्थापत्तिसमा, यथा—पूर्वोक्तानुमाने शब्दस्यानित्यत्वसाधर्म्यादनित्यत्वं यदि, तदाऽर्थापत्त्यासिद्धं नित्यत्वसाधर्म्या-

नित्यत्वमपि, एकतरावधारणे नियामकाभावादिति १७ । सर्वाविशेषप्रसंगोद्भावनम् अविशेषसमा, यथा—तत्रैव यदि कृतत्वादिनाऽनित्यघटादिसाधर्म्येण शब्दस्यानित्यत्वन्तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात्, मदुक्तसाधर्म्येण तत्सिध्यति, न तु त्वदुक्तेनेत्यत्र नियामकाभावादिति १८ । उभयपक्षसाधर्म्येण साधनोपपत्तिकथनमुपपत्तिसमा । यदि चानित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वं, तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यादिति १९ । वाद्युपदर्शितसाधनाभावेपि साध्यस्योपलब्धिकथनमुपलब्धिसमा, यथा—शब्दोऽनित्यः प्रयत्नानुविधायित्वाद्घटवदित्यत्र प्रयत्नं विनापि वायुनोदनवशात् वृक्षशाखाभंगजन्यस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्तीति २० । वादिनाऽनुपलब्धिवशात्कस्यचित्पदार्थस्यानंगीकारेऽनुपलब्धिवशादेव वाद्यभिमतस्यापियत्किंचित्पदार्थस्याभावसाधनमनुपलब्धिसमा, यथा—जलादेर्विद्यमानस्याप्यावरणवशादनुपलब्धिः, तद्वदुच्चारणात्पूर्वं शब्दस्य विद्यमानस्याप्यावरणवशादनुपलब्धिरित्येतन्मतं वादिना दूष्यते—यद्यावरणवशाच्छब्दो नोपलभ्यते, तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति । अत्रोत्तरं—यदि भवद्भिरनुपलब्धित आवरणाभावस्साध्यते, तदा अनुपलब्धेरप्यनुपलब्धेरनुपलब्ध्यभावे सिद्धे तदभावादावरणाभावासिद्धावावरणसिद्धिरिति २१ । धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणो नित्यत्वसाधनं नित्यसमा, यथा—शब्दस्य यदनित्यत्वं भवद्भिरुच्यते, तन्नित्यमनित्यं वा, यदि नित्यं तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम्, अथानित्यं तदा शब्दे कदाचिदनित्य-

त्वाभावोस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वमिति २२ । अनित्यदृष्टांतसाधर्म्यात्सर्वानित्यत्वप्रसंगोद्भावनमनित्यसमा । यथा—यद्यनित्येन घटेन सादृश्याच्छब्दोऽनित्य इत्युच्यते-तदा येन केनचिद्धर्मेण सर्वस्यैव तत्सदृशता तत्सर्वस्यानित्यत्वप्रसंग इति २३ । वाद्युक्तहेतोरन्यकार्येणापि संभवाभिधानम् कार्यसमा, यथा—तत्रैव प्रयत्नानुविधायित्वमुभयथापि संभवति । घटादिवच्छब्दस्वरूपोत्पत्तौ जलादिवदावरकनिवृत्ति च, उभयत्रापि प्रयत्नानुविधानदर्शनात् । तथा च—तस्यावरकनिवृत्तिरूपकार्यान्तरस्य सम्भवान्नानित्यत्वनियतत्वमिति २४ । क्वचित्कारणसमेति पाठः । तस्यापि कारणस्य प्रयत्नानुविधायित्वस्योभयत्र शब्दस्योत्पत्तौ तदावरकनिवृत्तौ च समत्वाऽभिधानमिति रीत्या उक्त एवार्थे पर्य्यवसानमवसेयम् । आसां शब्दरूपत्वाद्गुणेन्तर्भावः ॥

वादिनः पराजयहेतुर्निग्रहस्थानम् । तानि च प्रतिज्ञाहान्यादिभेदादेकविंशतिः । तत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा प्रतिज्ञाहानिः, यथा—शब्दोऽनित्यः, प्रत्यक्षगुणत्वादित्यत्र सोयं गकार इत्यादिप्रत्यभिज्ञाबलात्परेण बाधे उद्भाविते, अस्तु तर्हि नित्यः शब्द इति नित्यत्वमंगीकुर्वन्, वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति १ । परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनं प्रतिज्ञांतरम् । यथा—क्षित्यादिकं गुणजन्यं कार्यत्वादित्यत्रादृष्टजन्यत्वेन सिद्धसाधनोद्भावने सविषयकेति गुणविशेषणदानम् २ । स्वोक्तसाध्यविरुद्धहेतुकथनं प्रतिज्ञाविरोधः, यथा—द्रव्यं गुणभिन्नं, रूपादितः पृथक्त्वेनानुपलभ्यत्वादिति ३ ।

स्वोक्तेऽर्थे परेण दूषिते तदपलापः प्रतिज्ञासंन्यासः, यथा—शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति—केनोच्यते शब्दोऽनित्य इति ४ । परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानं हेत्वंतरम् । यथा—शब्दोऽनित्यः प्रत्यक्षत्वादित्यत्र सामान्ये व्यभिचारोद्भावने जातिमत्त्वे सतीति विशेषणदानम् ५ । प्रकृतानुपयुक्तार्थकथनमर्थान्तरम् । यथा—नित्यः शब्दः, अस्पर्शवत्त्वादिति हेतुः, हेतुपदं च हिनोतेस्तुनि प्रत्यये निष्पन्नम्,पदञ्च सुप्तिङन्तमित्यादि ६। अवाचकशब्दप्रयोगो निरर्थकम् । यथा—शब्दोऽनित्यः जबगडदशत्वात् इत्यादि ७ । परिषत्प्रतिवादिबोधप्रयोजकपदप्रयोगः अविज्ञातार्थम् । तच्च क्लिष्टान्वयमप्रसिद्धार्थकन्त्वरितोच्चारितमित्यादिरूपम् ८। परस्परानन्वितार्थकपदसमूहोऽयथार्थकम् । यथा—शब्दं, घटः, पटः, नित्यमनित्यञ्च प्रमेयत्वादित्यादि ९ । अवयवानां व्युत्क्रमेण कथनमप्राप्तकालम् । यथा—शब्दत्वाच्छब्दो नित्यमित्यादि १० । यत्किञ्चिदवयवशून्यावयवाभिधाने न्यूनम्, स्पष्टम् ११ । अधिकहेत्वादिकथनम् अधिकम् । यथा—शब्दोऽनित्यः शब्दत्वात् श्रावणत्वाच्चेत्यादि १२ । अनुवादं विना कथितस्य पुनः कथनं पुनरुक्तम्।यथा—शब्दोऽनित्यः शब्दो नित्य इत्यादि १३ । परिषदा त्रिरभिहितस्याप्यननुवादः अननुभाषणम् १४। परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्यावोधः अज्ञानम् १५। उत्तरार्हे परोक्तं बुद्ध्वापि उत्तरस्यास्फूर्तिवशात्तूष्णींभावः अप्रतिभा १६ । असम्भवत्कालान्तरककार्यव्यासङ्गमुद्भाव्य कथाविच्छेदो विक्षेपः १७ । स्वपक्षे

दोषमनुद्धृत्य परपक्षे दोषाभिधानम्मतानुज्ञा १८। उद्भावनार्हपर-कीयनिग्रहस्थानानुद्भावनं पर्य्यनुयोज्योपेक्षणम् १९। निग्रह-स्थानरहिते निग्रहस्थानोद्भावनम् निरनुयोज्यानुयोगः २०। एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालंब्यो-त्तरदानम् अपसिद्धांतः २१॥ प्रतिज्ञाहान्यननुभाषणाज्ञानाप्र-तिभाविक्षेपपर्य्यनुयोज्योपेक्षणानामभावे, अन्येषां हेत्वाभासव्यति-रिक्तनिग्रहस्थानानां गुणे, हेत्वाभासानां च द्रव्यादिष्वन्तर्भावो यथायथं बोध्यः।

दीधितिकारेण शिरोमणिना द्रव्यादिषु केपि खंडिताः, केप्यधिकाः स्वीकृतास्ते संक्षेपेण लिख्यन्ते। आकाशकालदि-शामीश्वरेन्तर्भावः। मनोपि त्र्यणुकात्मकं भूतमेव। परमाणुद्व्यणुकौ नांगीकार्यौ। अवयवधारायास्त्र्यणुके एव विश्रामः। ईश्वरे किमपि परिमाणन्नास्ति। रूपादिचतुष्टयमनुद्भूतन्न भवति। पृथक्त्वमन्योन्या-भावेन्तर्भवति। विप्रकृष्टत्वमेव दैशिकं परत्वम्, सन्निकृष्टत्वमेवापर-त्वम्। एवं ज्येष्ठत्वमेव कालिकम्परत्वम्, कनिष्ठत्वमेवापरत्वम्। विशेषपदार्थो न स्वीकार्यः। नित्यद्रव्याण्येव स्वतो व्यावृत्तानि रूपादीन्यव्याप्यवृत्तीन्यपि भवन्ति, बहीरक्ते घटेऽन्तः श्यामताप्रतीतेः। चित्रं रूपं भिन्नं नास्ति। कर्माप्यव्याप्यवृत्त्येव। एकत्वसंख्याया-असमवायिकारणं किमपि नास्ति, सर्वभावकार्येष्वसमवायिकारणस-त्त्वनियमस्याप्रामाणिकत्वात्। द्रव्यनाशम्प्रत्यसमवायिनाश एव हेतुः। द्रव्यस्य त्वाचप्रत्यक्षे स्पर्शवत्त्वमेव, चाक्षुषे च रूपवत्त्वमेव हेतुः, न तु मिलितन्द्वयम्। द्रव्यादित्रिकवृत्तौ प्रत्यक्षायां सत्तायामपि न मानम्। धर्मादिष्वतीन्द्रियेषु प्रत्यक्षत्वासम्भवात्। सत् इति

व्यवहारस्य सामान्यादिष्वपि सत्त्वात्स व्यवहारो वर्त्तमानतामेव विषयीकरोति । रूपादिवृत्तिः प्रत्यक्षसिद्धा । गुणत्वजातिरपि नांगीकार्या, धर्मादिषु प्रत्यक्षत्वासम्भवात्, द्वेषाभावादिषु गुणत्वव्यवहारदर्शनात्। एवमनुभवत्वं जातिरपि नास्ति,अनुमित्यादिष्वनुभवत्वव्यवहारः स्मृत्यन्यज्ञानत्वमादायैव । घटाभावाभावो न घटरूपः किन्तु भिन्नः। तृतीयोऽभावः प्रथमाऽभावरूपः। ध्वंसप्रागभावोपि प्रतियोगिरूपः, प्रतियोगिप्रागभावरूपश्च न भवति। स्वत्वमपि पदार्थान्तरम् प्रतिग्रहक्रियादिभिर्जन्यते । एवं मृदादिषु घटाद्युत्पादकशक्तिर्भिन्नैव । संख्यापि पदार्थान्तरम्, न गुणरूपम्, एकं रूपमिति गुणेपि सत्त्वात् । समवायोपि नाना, अन्यथा जलादिषु गन्धादिमत्त्वं प्रतीयेत, समवायवद्वैशिष्ट्यमपि अभाववत्ताप्रतीतये पदार्थान्तरम् । कारणत्वमव्यतिरिक्तम् । धूमादिकारणत्वं वह्न्यादौ प्रत्यक्षेण सिद्ध्यति । एवं कार्यत्वमप्यतिरिक्तम् । सर्वत्र युक्तयो विस्तरभयान्न लिखिताः । पदार्थतत्त्वनिरूपणाख्ये शिरोमणिकृतग्रंथे द्रष्टव्याः ॥ 'नासङ्गतम्प्रयुञ्जीते'त्यभियुक्तवचनात्कस्यचित्पदार्थस्य निरूपणे सङ्गतेरुपयोगः। अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयानुकूलसंबन्धः॥ निरूपणीयनिष्ठा सङ्गतिः। उक्ता सङ्गतिः षोढा—प्रसंगसंगतिः १, उपोद्घातसंगतिः २, उपजीव्योपजीवकभावसंगतिः ३, अवसरसंगतिः ४, निर्वाहकैक्यसंगतिः ५, कार्यैक्यसंगतिश्चेति ६। उपोद्घातादिभिन्नस्मरणप्रयोजकसम्बन्धः प्रसंगसंगतिः। यथा—प्रमायाः प्रत्यक्षादिविभागानन्तरम्प्रत्यक्षादिप्रमाणविभागनिरूपणे ॥ प्रकृतोपसाधकत्वम् उपोद्घातसंगतिः । यथा—प्रमाकरणरूपप्रमाणनिरूपणे यत् करणनिरूपणं तत्रोपोद्घातसंगतिः ॥ प्रत्यक्षानन्तरमनुमान-

निरूपणे उपजीव्योपजीवकभावसंगतिः । प्रत्यक्षस्यानुमानोपजीव्यत्वात् ॥ प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अनंतरवक्तव्यत्वम् अवसरसंगतिः।यथा—अनुमानानन्तरमुपमानिनिरूपणे॥ एकप्रयोजकप्रयोज्यत्वन्निर्वाहकैक्यसंगतिः। यथा—प्रत्यक्षानन्तरं परामर्शानुमित्योर्निरूपणे ॥ एककार्यानुकूलत्वं कार्यैक्यसंगतिः । यथा—व्याप्त्यनन्तरम्पक्षधर्मतानिरूपणे, इति शिवम् ॥ इति श्रीन्यायप्रदीपे सप्तमः परिच्छेदः ॥ ७ ॥

प्राचां विचिन्वतो वाचो हित्वा काठिन्यविस्तरौ ॥
न्यायप्रदीपानुपूर्वीलेखमात्रे मम श्रमः ॥ १ ॥
पदकृत्यम्पूर्वपक्षं तदाद्युक्तञ्च लक्षणम् ॥
प्रमाणमादिशब्दोक्तमनुक्ते दर्शयेद्गुरुः ॥ २ ॥
अनेन तृणकूर्चेन बुद्धिवह्निः प्रदीपितः ॥
प्रवेष्टुं कठिनेप्यर्थे प्रभूयात्कृपयेशितुः ॥ ३ ॥
पञ्चवेदनवक्षोणी १९४५ मिते विक्रमवत्सरे ॥
आश्विने शुक्ले दशम्याम्पूर्णतामेष गाहते ॥ ४ ॥
अनेकशास्त्रगूढांशग्राहकैकमहामतिः ॥
श्रीरामसिंहो बुन्दीशो जीयादाचन्द्रतारकम् ॥ ५ ॥
ममात्मजाः सोदरजाश्च रामप्रतापगोविन्दसहायमुख्याः ॥
स्वाचारविद्याविनयैरुपेताः कुर्वन्तु चेतः शिशिरं मदीयम् ६ ॥

इति श्रीमन्महाराजाधिराजमहारावराजेत्यादिपदवीविराजमानबुन्दीश्वरश्रीरामसिंहप्रभुप्रसादलब्धजीविकेन गंगासहायशर्मणा कृतो न्यायप्रदीपः समाप्तः ॥

---

खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर"—स्टीम्—प्रेस, बम्बई.

# अथ न्यायप्रदीपशुद्धिपत्रम् ।

अत्रानुस्वारस्यापदान्तेपि परसवर्णः प्रायो न कृतः स स्वयमूह्यः ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ८ | कुर्वे | करोमि |
| १ | १४ | यत्ति | यस्ति |
| १ | १४ | यन्न | यो न |
| ३ | १० | नाशे ततः | नाशस्ततः |
| ४ | १ | अवयविनोऽवयवेषु च | योऽवयवेष्वऽवयविनो |
| ४ | १ | विशेषगुणकर्मणान्द्रव्ये | द्रव्येषु गुणक्रियाविशेषाणाम् |
| ५ | ९ | दिव्यौदर्या | दिव्योदर्यो |
| ५ | ११ | मतम्मतम् | विदाम्मतम् |
| ५ | २० | तदुपाधिमूर्त्ते | तदुपाधिर्मूर्त्त |
| ६ | १ | विभ | विभू |
| ८ | १० | मध्य | मध्यं |
| ९ | १७ | संयोगं | संयोग |
| १३ | २१ | नाशाद्व्यणुक | नाशाद्व्यणुक |
| १५ | २० | करणम्मतम्॥ | करणम्मतम् ॥ फलायोगव्यवच्छिन्नं तन्नवीनमते स्मृतम् ॥ |
| २० | १० | द्वयौर्नै | द्वयोर्नै |
| २० | १९ | बुद्ध्यादिष | बुद्ध्यादिषट्क |
| २१ | १० | पृथक्त्वं स्नेह | पृथक्त्वस्नेह |
| २३ | १८ | बुद्ध्यादिष | बुद्ध्यादिषट्क |
| २३ | १९ | नयनेंद्रियम् | नयनेन्द्रियम् |
| २४ | ६ | ततीयो | तृतीयो |
| २५ | ९ | स पक्षो | सपक्षो |
| २५ | १६ | मेते | मेत |
| २७ | १९ | यादृश्या | सादृश्या |
| २९ | ३ | वत्त्या | वृत्त्या |
| ३० | ४ | सनक्यजादिकः | सनक्यजादिकः |
| ३१ | ११ | प्रकृत्यथ | प्रकृत्यर्थे |
| ३२ | ११ | कत्तु | कर्त्तु |

| पृ० | पं० | अशुद्धम्. | शुद्धम् |
|---|---|---|---|
| ३२ | १२ | कंतृत्व | कर्त्तृत्व |
| ३२ | १७ | नाथा | नार्थो |
| ३३ | १७ | स्वारक्षिकी | स्वारसिकी |
| ३५ | ४ | नं शाब्दे हेतुरिष्यते | नं मच्चित्तेऽवतिष्ठते |
| ३७ | १४ | मानार्थाः | भानार्थाः |
| ३७ | १५ | तत्रान्या | तत्राऽन्यथा |
| ४३ | १९ | निर्वत्या | निवर्त्या |
| ४४ | ११ | दण्डादिसत्त्वे | दण्डसत्त्वे |
| ४४ | १२ | दण्डाद्यभावे | दण्डाभावे |
| ४४ | २० | सत्त्वै | सत्त्वे |
| ४४ | २१ | कारणसत्त्वे | कारणासत्त्वे |
| ४६ | २ | रादिमन्तरेण | रादिकमन्तरेण |
| ४६ | ३ | भावाभिन्न | भावभिन्न |
| ४९ | ७ | मस्तित्वं | मस्तीतिप्रतीतिविषयत्वं |
| ५६ | ५ | प्रकारेन्तर्भावः | प्रकारे कथञ्चिदन्तर्भावः |
| ५६ | १६ | अङ्सङ्गि | अङ्गसङ्गि |
| ६४ | १५ | विरुध्यतेति | विरुध्यत इति |
| ६६ | १८ | अन्यत्र | अन्यत्रा |
| ६८ | १२ | एकं रूपं | एकं रूपं रसात् पृथक् |
| ६८ | १३ | श्चतुर्विंशतिगुणाः | श्चतुर्विंशतिर्गुणाः |
| ६९ | १९ | घठः | घटः |
| ७२ | ५ | चातीन्दियम् | चातीन्द्रियम् |
| ७२ | १२ | तद्दिधा | तद्विधा |
| ७२ | १७ | स्यन्दनै | स्यन्दने |
| ७४ | १३ | विषयगुणः | विषयगुणो वा |
| ७५ | ३ | द्विष्ठ | द्विष्ठ |
| ७६ | १५ | येप्येन | येप्येनं |
| ७६ | १७ | मेव च | मेव |
| ७९ | १० | प्रतियोगितान्यतर | प्रतियोगिताऽनुयोगितान्यतर |

| पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ७९ | १३ | समवाय | समवायः |
| ८० | २० | पदार्था | पदार्थौ |
| ८१ | ३ | वाच्यम् | वाच्यम्,अत्र |
| ८३ | २ | न्ताभावः | न्ताभावश्च |
| ८७ | १६ | अकाश | आकाश |
| ८९ | १५ | दण्डादि | दण्डादि नव्यास्तु फलायोगव्य-वच्छिन्नं कारणं करणमित्याहुः |
| ९२ | २० | स्तैजसत्वन | तैजसत्वेन |
| ९५ | २ | निश्चित्सा | निश्चितसा |
| ९६ | १२ | केन्वित्त | केचित्तु |
| ९६ | १३ | मयव्यन्वि | मन्वयव्याति |
| ९६ | १८ | एवु | एव |
| ९६ | २० | तात्सिद्धे | तत्सिद्धे |
| ९७ | १ | पूर्ववत् । शेषवत्सा | पूर्ववत् शेषवत्सा |
| ९८ | १ | दृष्टात | दृष्टान्त |
| ९९ | १० | र्देन्धन | र्द्रेन्धम |
| १०० | ११ | र्म्भवि | र्म्यवि |
| १०१ | १६ | भतार्थ | भूतार्थ |
| १०२ | २ | आकाक्षादिसहकारि-शाब्दबोधः | आकाङ्क्षादिसहकारिशाब्द-बोधः |
| १०२ | ३ | एकपदर्थे | एकपदार्थे |
| १०४ | १ | लक्षणां विनैव | लक्षणां विनेव |
| १०४ | १२ | भतले | भूतले |
| १०७ | ४ | पूर्वदश | पूर्वदेश |
| १०८ | ४ | संयोश्च | संयोगश्च |
| १०८ | १३ | निवृति | निवृत्ति |
| १०८ | २० | च्छिन्नं | च्छिन्ना |
| ११३ | १९ | गतार्थ | गतार्थता |
| ११५ | २० | नीलस्यं | नीलस्य |

| पृ० | पं० | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ११७ | ४ | नञसत्त्वे | नञ्सत्त्वे |
| ११७ | २१ | बाधक | बोधक |
| ११९ | ११ | रांधेय | राधेय |
| १२१ | ११ | पतियोगि | प्रतियोगि |
| १२१ | १९ | पारानुकूल | व्यापारानुकूल |
| १२७ | १५ | व्यावकत्वं | व्यापकत्वं |
| १२७ | १७ | देशावत्तित्व | देशावृत्तित्व |
| १२८ | ३ | लक्षक्षणे | लक्षणे |
| १३१ | ३ | रजकंस्य | रजकस्य |
| १३१ | १४ | ईर्पा | ईर्ष्या |
| १३७ | २१ | मायत्वे रूपे | माश्रयस्वरूपे |
| १३८ | १ | व्यापरत्वे | व्यापारत्वे |
| १३८ | २ | रूपैण | रूपेण |
| १३८ | ९ | लुटो | लृटो |
| १३८ | १० | वर्त्तमानप्रागभवो | वस्तुतो वर्त्तमानप्रागभावो |
| १३८ | १५ | मनुद्यतन | मनद्यतन |
| १३८ | १९ | लक्ष | लक्ष्य |
| १४० | १३ | प्रयुक्तै ओदन | प्रयुक्तौदन |
| १४२ | ८ | तस्या | तस्य |
| १४४ | १२ | प्यवच्छेदा | व्यवच्छेदा |
| १४६ | १८ | धमाभाव | धूमाभाव |
| १५० | ८ | नुभव | नुभवः |
| १५० | २० | आख्यातिः | अख्यातिः |
| १५१ | ४ | इयमवाख्यातिः | इयमेवाख्यातिः |
| १५६ | १ | स्वाव्याघात | स्वव्याघात |
| १५९ | १२ | ऽतीति | ऽस्तीति |
| १६३ | १२ | व्यतिरिक्तम् | प्यतिरिक्तम् |
| १६४ | ३ | नोनरूपेण | ननिरूपणे |

इति शोधनपत्रम् । अत्रापि स्खलितं यत्तद्बुधैश्शोध्यम् ।

